# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




---

२७ वर्षे
३ अङ्कः

मार्गशीर्षपूर्णिमा वै० सं० २०२९
२० दिसम्बर, १९७२

## मूल्यप्रेषणसूचना—

२७ तमवर्षीयस्य पत्रिकाङ्कस्य वार्षिकं मूल्यमद्यावधि विभागे बहुभिर्ग्राहकैर्न प्रेषितमिति निवेद्यन्ते ते वार्षिकमूल्यप्रेषणाय ।

सम्पादकः

## लेखकेभ्यो निवेदनम्—

'सारस्वती सुषमा' इति पत्रिकायां नूतनतथ्याविष्कारका नूतनतथ्येन स्पष्टीकृततथ्या वाऽनुसन्धानात्मका निबन्धाः प्रकाश्यन्ते । ते सम्पादकः, 'सारस्वती सुषमा' वाराणसेयसंस्कृत-विश्वविद्यालयः, वाराणसी–२ इति सङ्केतेन प्रेषणीयाः सुधीभिः ।

प्रकाशितनिबन्धस्य मुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते लेखकाय, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवतीति ।

सम्पादकः

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

सह-सम्पादकः

**श्रीमध्वाचार्यः आद्यः**, तर्कतीर्थः, मीमांसा-वेदान्ताचार्यः



२७ वर्षे

३ अङ्कः

वार्षिकमूल्यं १० रूप्यकाणि

प्रत्यङ्कमूल्यं ३ रूप्यकाणि

❋ श्रीः ❋

## वाराणसेयसंस्कृतविश्वविद्यालयस्य विशिष्टं प्रकाशनम्

१. योगिनीहृदयम् ( योगतन्त्रम् ) १०-००
अमृतानन्दयोगिकृतदीपिका-भास्कररायकृतसेतुबन्धकयुक्तम्,
म० म० प० गोपीनाथकविराजद्वारा सम्पादितम् ।

२. भक्तिचन्द्रिका ( भक्तिशास्त्रम् ) १०-००
नारायणतीर्थकृता–आचार्य-श्रीबलदेवोपाध्यायद्वारा सम्पादिता ।

३. त्रिपुरारहस्यम् ( तन्त्रशास्त्रम् ) ६-००
श्रीनिवासभट्टविरचिततात्पर्यदीपिकाटीकासहितम् ।
म० म० प० गोपीनाथकविराजद्वारा सम्पादितम् ।

४. तन्त्ररत्नम् ( मीमांसाशास्त्रम् ) पार्थसारथिमिश्रविरचितम् ।
श्रीरामचन्द्रदीक्षितसम्पादितम् ।
अस्य प्रथमो भागः १-८८
,, द्वितीयो भागः २-२५
,, तृतीयो भागः ५-५०
,, चतुर्थो भागः १३-००

५. न्यायकौस्तुभः ( न्यायशास्त्रम् ) प्रत्यक्षभागः ३-२५
प० महादेवपुणतामकरविरचितः ।
डॉ० उमेशमिश्रसंपादितः
प्रथमो भागः
न्यायकौस्तुभः ( अनुमानखण्डात्मकः ) १०-००
प० महादेवपुणतामकरविरचितः ।
स्व० दामोदरलालगोस्वामिसम्पादितः

६. स्मार्तोल्लासः ( धर्मशास्त्रम् ) १-३ भागाः १-५०
प० शिवप्रसादपाठकविरचितः ।
श्रीभगवत्प्रसादमिश्रसंपादितः

# विषय-सूचिका





# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

| २७ वर्षः | मार्गशीर्षपूर्णिमा, सं० २०२९ | ३ अङ्कः |
|---|---|---|

# बिन्दुसिद्धिः

डॉ० राममूर्तित्रिपाठी
प्राध्यापकः
हिन्दीविभागः, सागरविश्वविद्यालयः, सागरः, मध्यप्रदेशः

शैवेषु शाक्तेषु चागमेषु 'बिन्दु' शब्दोऽयं नैकविधेष्वर्थेषु शतशः प्रयुक्तः। तत्र सिद्धान्तागमानुयायिन इत्थं सिद्धान्तयन्ति। निगदन्ति हि ते यद्विदितमेव समेषां दृष्टिपथमागतस्य विचित्रविविधभिदुरावलीढस्य वर्णपदमन्त्रकलातत्त्वभुवनषडध्वान्तर्गततत्त्वान्तर्वर्तिनः संसारस्य कार्यत्वम्, तस्य सावयवकत्वात्, यत्सावयवं तत्कार्यमिति व्याप्तेः। तच्च कार्यं कर्तृकरणोपादानसापेक्षमित्यत्र नास्ति कश्चिद् विवादः। लोकेऽपि हि घटादेः कुलालमृद्दण्डाद्यपेक्षित्वं दृश्यत एव। एवमेव च विश्वात्मककार्योत्पत्तावपि कर्तृत्वेन शिवं करणत्वेन शक्तिमुपादानतया च ते बिन्दुमङ्गीकुर्वन्ति। इमे चिन्तामणिप्रभृतिरत्नवदाराधकानामभीष्टदायित्वेन रत्नसाधर्म्याद् रत्नत्वेन व्यपदिश्यन्ते। एवञ्च सिद्धान्तागमानुयायिनः शिवः शक्तिर्बिन्दुश्चेति रत्नत्रयं जगद्बीजं मन्यन्ते। तत्र बिन्दोर्नामान्तराण्यपि सन्ति, यथा—शब्दतत्त्वमघोषावाक्पराकुण्डलिन्यनाहतशब्दपरव्योमविद्याप्रभृतीनि।

प्रक्रान्तमतेन स्वतन्त्रेण शिवेन शब्दाननुविद्धेन निर्विकल्पमज्ञानेन चिद्रूपया शक्त्या वा बिन्दुः क्षोभ्यते। क्षुब्धाच्च बिन्दोर्नादो ज्योतिश्च प्रादुर्भवतः। प्रथमस्तु वाचकाध्वा, परस्तु वाच्याध्वेति कथ्येते। पूर्वत्र वर्णः (परः) पदम् (सूक्ष्मम्) मन्त्रश्च (स्थूलः) इत्यवान्तराध्वत्रयम्; परत्र च वाच्या ध्वनिकला, तत्त्वम्, भुवनञ्चेति भिन्नमध्वत्रयम्। एवञ्च सम्भूय षडध्वानः। कलाः पञ्च निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताः। शिवशक्तिसदाशिवेश्वरशुद्धविद्येति पञ्च शुद्धतत्त्वानि (प्रत्यभिज्ञादर्शनानुरोधेनेमान्येव परविश्वान्तर्गतानि सन्ति) मायादिपुरुषान्तानि सप्त मिश्रतत्त्वानि, प्रकृत्यादिधरण्यन्ततत्त्वानि चतुर्विंशतिसंख्यकान्यशुद्धतत्त्वानि–इति सम्भूय षट्त्रिंशत्तत्त्वानि वर्तन्ते। भुवनानि तु षट्पञ्चाशदुत्तरं शतद्वयम्। तत्रेदं चित्रम्—




तत्र षडध्वान्तर्गततत्त्वाध्वान्तःपात्यवान्तरसिताध्वन उपादानतया बिन्दोः स्वीकृतिः समर्थिता। तथाहि सदाशिवादिशुद्धतत्त्वौघं नित्योपादानहेतुकम्, विकारित्वात् कुम्भवत्। तदेव नित्योपादानं शुद्धा चित् प्रकाशरूपा बिन्दुः, अशुद्धा त्वचिद् माया, या अनन्तेन सविकल्पकं ज्ञानमाश्रित्य क्षुब्धा सती असिताध्वन उपादानम्। न च घटोपादानकारणस्य मृत्पिण्डस्यानित्यत्वात्, अनेनापि शुद्धाध्वोपादानेनानित्येन भवितव्यमिति वाच्यम्, वस्तुतस्तस्यापि घटादेः पार्थिवस्य मायैव नित्योपादानम्। उत्पादविनाशशालिधर्मिणां हि वस्तूनां घटकपालाद्यवान्तरपरिणामेनावान्तरकार्यकारिणमपि सत्यपि पृथिव्यादितत्त्वानां परम्परोपादानं मायाख्यं नित्यं परमकारणमभ्युपगन्तव्यम्, अन्यथाऽनवस्था स्यात्। उक्तं हि—

"मायातत्त्वं जगद्बीजमविनाश्यव्ययात्मकम्।"

तथा च यथा अस्याशुद्धाध्वन उपादानं नित्यम्, एवमेव शुद्धाध्वनोऽप्युपादानं नित्यम्, तदेव बिन्दुः। परिशेषानुमानेनापि बिन्दोः सिद्धिः।

कथितं हिः—

न माया नेश्वरो नाणुर्न शक्तिः शुद्धवर्त्मनः।
उपादानमतो बिन्दुः परिशेषेण लभ्यते॥

अर्थाद् माया तावन्न शुद्धाध्वन उपादानम्। तथाहि माया अशुद्धा जडात्मिका च। सकलाणूपभोग्यं शरीरादिकमुत्पादयितुमेषा मायाऽनन्तनाथेन क्षोभ्यते, तदर्थं च सविकल्पज्ञानमपेक्षितम्। सविकल्पज्ञानं च स्वरूपोपलब्ध्या शब्दानुवेधमपेक्षते। स च शब्दानुवेधः शब्दमन्तरा न सम्भवतीति मायाक्षोभात् प्रागेव शब्दोपादानेन केनापि भाव्यम्। तच्चोपादानं न शक्तिः, न वा शिवः, तयोरपरिणमित्वात्, परिणामित्वे हि जाड्यापत्तेः। अतः शिवशक्तिभिन्नमायाक्षोभात् प्राग् मायात ऊर्ध्वं किञ्चिदस्ति, यतः शब्दः प्रादुर्भवति, स एव बिन्दुः। प्रकृतेर्मायाया इव बिन्दोरपि एकदेशेनैव परिणाम इति स्मरणीयम्।

न च किमनेनाप्रसिद्धेन बिन्दुनामधेयेन कल्पितेन ? ईश्वरः, आत्मा, तच्छक्तिर्वोपादानमस्तु शुद्धाध्वन इति वाच्यम्, यतो हि न तावद् महेश्वरः कारणम्, कार्याणां हि मृदादीनामुपादानमचेतनमेव दृष्टम्, शिवात्मशक्तयस्तावत् चिन्मय्य इति न ता उपादानं भवितुमर्हन्ति। किञ्चोपादानं हि परिणामेन वा वृत्तिरूपेण वा कार्यमुत्पादयति, शिवादीनामेषां तु वृत्तिपरिणामौ न स्तः, अविकारित्वात्। विकारित्वे च जडत्वमनित्यत्वं च प्रसज्येयाताम्।

अणुवैषम्यादपि बिन्दुर्लक्ष्यते। तथाह्यणूनामात्मनां ज्ञानादिवैचित्र्यं दृश्यत एव। तच्च न स्वतः संभवि, न वा आत्मना शक्तया वा तेषामविकारित्वात्, शक्त्यात्मनोर्वैचित्र्यं विकारित्वाभावे औपाधिकमेवाङ्गीकरणीयम्, उक्तमपि —

बहुधा यदुपस्थानं तदुपाधिवशाद् भवेत्।

ततश्चात्मनां चिच्छक्तिर्येन नादात्मना परिणतेनाभिधेयबीजमुखेन सम्पृक्ता मायीयसविकल्पार्थावलोकने प्रवर्तते, यस्य च प्रत्यात्मनियतैर्नादाख्यैर्विचित्रैर्वृत्तिभेदैरुपहिता विचित्रैव प्रकाशिते, स बिन्दुः। न च कर्मणैव प्रत्यात्मनियतेनात्मानात्मभोगवैचित्र्यमिव ज्ञानवैचित्र्यमप्यस्तु, किं बिन्दुनेति वाच्यम्—कर्मापि हि न स्वतो भोगवैचित्र्यं करोति, अन्यथा पृथिव्यादीनामप्यनुपयोगः। एवमेव ज्ञानवैचित्र्यमपि नादसहकृतमेव कर्म कर्तुमर्हति, न तन्निरपेक्षम्। ततश्च तदर्थं बिन्दुः स्वीकरणीय एव।

ततश्च यथा पञ्चभूतादिभूताकाशोऽवकाशदायित्वेन स्थूलशब्दाभिव्यञ्जकत्वेन च सूर्यादीनां ज्योतिषां भोगाधिकारयोः करणम्, एवं शुद्धाध्ववासिनां शिवादीनां सर्वज्ञत्वसर्वकर्तृत्वात्मकशिवत्वयोगिनां विघ्नेश्वरादीनामवकाशदानेन शब्दोत्पादनेन च भोगाधिकारयोः करणं बिन्दुरेव। तच्चानश्वरत्वेनपराकाशमतिशायिकं परमव्योमाख्यमाणमज्ञाः प्राहुः।

इत्थं च सिद्धमिमं बिन्दुं सिद्धान्तानुयायिनः शिवस्य परिग्रहशक्तित्वेन मन्यन्ते, शक्तिं च समवायिनीं व्याहरन्ति। अर्थात् शिवस्य द्वे शक्ती—परिग्रहशक्तिः, समवायिनी शक्तिश्च। तत्र प्रथमा बिन्दुश्चरमा च शक्तिरित्युच्येते। अत्रापि यत् केचन प्रत्यवतिष्ठमाना निगदन्ति यद् दृक्शक्तिवद् बिन्दुरपि पराकुण्डलिन्यपरपर्यायः शिवे समवैति, न ततो मायावद् व्यतिरिक्ता। एवं च शिवो ज्ञानशक्त्या विजानन् क्रियाशक्त्या सर्वं करोतीति तत् सर्वमसङ्गतम्। बिन्दुर्हि तत्त्वभुवनाद्युपादानम्, ततश्चैतस्य बिन्दोः परिणामित्वमवश्यमभ्युपेयम्, परिणामि च यद् वस्तु तदवश्यं जडात्मकम्, यथा शरीरमिति क्रमेण बिन्दोरपि जडता। जडस्य बिन्दोश्चेत्, तादात्म्यात्मसमवायः शिव उच्येत, तदा शिवस्यापि जडत्वं प्रसज्येत। न चेष्टापत्तिः, आगमविरोधात्। कर्तृत्वमपि शिवस्य वस्तुतः क्रियावेशः, प्रत्युत क्रियायां शक्तत्वमेव। ततश्चायस्कान्तशक्तिरिवायसि शिवशक्तिः सन्निधिमात्रेण बिन्दाविव क्रियावेशः, अतः क्रियाहेतुभूतत्वाद् ज्ञानशक्तिरेव क्रियाशक्तिः, न तु बिन्दुः क्रियाशक्तिः, यो हि तत्र शिवे समवायं गच्छेत्। एवं च सिद्धं शिवस्य परिग्रहशक्तिरूपबिन्दुरत्वम्।

# श्रीवत्साचार्यः, उदयनाचार्येण सम्बन्धश्च

**श्रीनारायणमिश्रः**

व्याख्याता

संस्कृतपालिविभागः, काशीहिन्दूविश्वविद्यालयः

## श्रीवत्साचार्यसङ्केतः

श्रीवत्साचार्यः न्यायाचार्येष्वन्यतमः। परं परिशुद्धेः उदयनाचार्यसङ्ग्रथितायाः सम्पूर्णायाः प्राप्तेः पूर्वमयमाचार्यो विदुषामाधुनिकानामितिहासविदामज्ञात एवासीत्। समासादितायां समग्रायां परिशुद्धौ श्रीवत्साचार्यस्य नाम प्रकटीभूतमिति दार्शनिकानां कृते एका महतीयमुपलब्धिः। उदयनाचार्यो द्वितीयाध्यायारम्भे आचार्यमेनं स्मरति—

"संशोध्य दर्शितरसा मरुकूपरूपाष्टीकाकाकृतः प्रथम एव गिरो गभीराः।
तात्पर्यतो यदधुना पुनरुद्यमो नः श्रीवत्सवत्सलतयैव तथा तथापि॥"[1]

इतः परमपि षट्कृत्वः परिशुद्धिकारः स्मरत्येनम्—

(क) "ननु पदसमूहानां वाक्यानामित्यसङ्गतम्[2], न हि वाक्यमपि स्वार्थे सङ्केतग्रहमपेक्षते; पूर्वापरविरुद्धं चेति। यदूचे स्वयमेव 'न पदं तदर्थो वा वाक्यार्थबोधे लिङ्गम्, तत्र सम्बन्धग्रहानपेक्षणात्' इति श्रीवत्सः। अत्रोत्तरम्—वाक्यान्यपि क्वचित्सङ्केत्यन्ते, यथा—कारयाम्बभूवेत्यादि। तदभिप्रायेणेयं टीका॥"[3]

अत्र श्रीवत्साचार्यः (२।१।६८) सूत्रस्थं तात्पर्यटीकाकृद्वचनम् "पदसमूहानां[4] वाक्यानाम्" युक्त्या (२।१।५२ सूत्रस्थ) तात्पर्यटीकोक्तिविरोधेन च खण्डयति। परिशुद्धिकारस्तु टीकाकृद्वचनं तर्केण मण्डयति।

(ख) परस्तात्पुनः २।२।१ सूत्रव्याख्यानावसरे द्वितीयाध्यायाह्निकयोर्विषयसाङ्कर्यविषये श्रीवत्साचार्यः समुल्लिखितः।

---

१. तात्पर्यपरिशुद्धौ ५५ पृष्ठे (सरस्वतीभवनग्रन्थसंख्या ३३३१०)।
२. अयं ग्रन्थो द्वितीयाध्यायप्रथमाह्निकान्तिमसूत्रस्थः। अत एव द्वितीयाध्यायद्वितीयाह्निकादारभ्य श्रीवत्स उदयनेनानेकदा स्मृत इति मिश्रमहाशयानामुल्लेखः (History of Indian Philosophy, Vol. II, P. 145) न युक्तः।
३. तात्पर्यपरिशुद्धौ ९२ पृष्ठे (सरस्वतीभवन-ग्रन्थसंख्या ३३३१०)।
४. अत्र तत्समूहानां······इति मुद्रितः पाठः, अर्थे तु न भेदः।

अत्र[1] श्रीवत्सः—ननु प्रथमेऽप्याह्निके प्रत्यक्षशब्दयोरनुमानान्तर्भावमुखेन न्यूनतां पूर्वपक्षयित्वा चतुष्ट्वमेवाक्षिप्तम्, समाधाने च विभागोद्देश [ सूत्र ] एव समाहितः सोंऽश इह न वक्तव्योऽन्वर्थार्थ ( वक्तव्य इत्युक्तार्थ—? ) सङ्करेण पुनराह्निकसङ्करप्रसङ्ग इति ! न, अन्तर्भावेन ( [2]अन्तर्भावाभावेन ? ) मुख्यतो लक्षणस्यैव बोधात्, परं नहि परस्परासङ्कीर्णत्वक्षणव्यवस्थितानां ब्रह्मणापि मिथोऽनुप्रवेशः शक्यः; ततः परस्परा ( न ) नुप्रवेशोपदर्शनपूर्वपक्षेण लक्षणानामेवा[3]ऽसिद्धत्वमतिव्यापकत्वं वाऽभिधीयते, आधिक्ये तुने ( मुनेः ? ) कदाचिल्लक्षणक्षतिः [ इति ] अधिकसंख्याव्यवच्छेद एव केवलप्रसङ्गतः[4] स्यादिति नाह्निकयोरर्थसङ्करप्रसङ्ग इति सर्वमवदातम्।

( ग ) इतः परम् ३।१।२७ सूत्रव्याख्याने परिशुद्धिकारः श्रीवत्साचार्यं स्मरति—"एवं पञ्चभिः प्रकरणैरात्मा परीक्षितः। शरीरमिदानीं परीक्ष्यते। अत्र श्रीवत्सः—नन्वात्मपरीक्षारूपैकार्थतया मिथः साकाङ्क्षतायामेकवाक्यतया च कथं नामीभिरेकमाह्निकमिति ? उच्यते—शरीरादिप्रकरणानामारम्भणीयानां तृतीयाध्यायानुप्रवेशस्य प्रागेव समर्थितत्वाद् आह्निकान्तर्भूतानां च तद्व्याघातात् स्वरूपतश्चोपसङ्ग्राहकस्योपाधेरभावात् द्वितीयाह्निकोपाधिना चानुपसङ्ग्रहात् पारिशेष्यात् प्रथमोपाधिनैव क्रोडीकरणम्। न चात्मपरीक्षारूप उपाधिस्तथा भवितुमर्हतीति नासावाह्निकोपाधिः, किन्तु पूर्वोक्त एव। तत् किमेषां प्रकरणानामात्मपरीक्षा नार्थो न वा विवक्षितः ? नन्वर्थोऽपि विवक्षतोऽपि नाह्निकोपाधिरिति ब्रूमः। प्रधानतया हि यो यस्यार्थः स तत्रोपाधिरिह विवक्षितः, न तु प्रसङ्गत उपोद्घाततः प्रपञ्चतो वा। इह च प्राधान्यादात्मपरीक्षा प्रथमप्रकरणार्थ एव। **दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यनेन** हि व्यवस्थितविषयेभ्य इन्द्रियेभ्योऽव्यवस्थितविषयमात्मानं साधयता शरीरादिभ्योऽपि व्यतिरेकः साधित एव, केवलं शिष्यबुद्धेर्विशदी-

---

१. ता० प०, पृ० ९३-९४ ( सरस्वतीभवन-ग्रन्थमाला—३३३१० )।

अत्र सरस्वतीभवन एकस्यैव हस्तलिखितपुस्तकस्योपलम्भात् पाठसंशोधनं दुष्करमिति कृत्वा मया यथामति युक्ततरम् पाठम् (        ) प्रकोष्ठके स्थापयितुं प्रयासः कृतः, [        ] इति प्रकोष्ठे तु पूरणार्थमपेक्षितोंऽशो निक्षिप्तः। परन्त्वत्रान्यथापि संशोधनं सम्भाव्यते मूलादर्शावलोकनान्तरम्।

२. विभागोद्देशसूत्रे अर्थापत्त्यादीनामन्तर्भावाऽवचनादित्यर्थः।

३. लक्षणानामेवतमापयासिद्धत्व······इति आदर्शस्थः पाठः।

४. अत्र तुलनीयम्—"······ऐतिह्यादीनि प्रत्यक्षादिष्वन्तर्भावयितुम् ये यत्रान्तर्भवन्ति तत्र तेषां प्रदर्शनार्थम्—प्रकरणम् इति। सिद्धत्वात् अनारम्भः ?—नन्वयमर्थः चत्वार्येव प्रमाणानीत्यस्मिन्नेव विभागोद्देशसूत्रे सिद्ध इति सिद्धत्वात्पुनरनारम्भ इति ? न, अवधारणप्रयोजनस्य इतः सिद्धेः। येन न्यायेन चत्वार्येव प्रमाणानीत्येतदवस्थाप्यते स न्याय इह प्रकरणे वर्ण्यत इति। तस्मादारभ्यमेवेति॥" न्यायवार्त्तिकम् २।२।१॥

भावाय उत्तरत्र प्रपञ्च्यते । तस्माद्यथोक्तमेव न्याय्यमिति । एतेनान्यत्रापीन्द्रियद्वैतादि-प्रकरणेषु सङ्गतिरनुसन्धेयेति ।"[१]

द्वितीयतृतीयप्रसङ्गयोः परिशुद्धिकारः श्रीवत्समतं यथावदुपस्थापयति खण्डयत्येव वेत्यत्र विप्रतिपत्तिर्विदुषाम् । विशेषेण तृतीयविषये । दिनेशचन्द्रभट्टाचार्यमहाशयः तृतीयं प्रसङ्गं श्रीवत्सस्योदयनाचार्यो व्यपदिशति यथावत्—तत्र सम्प्रतिपत्तिश्चाचार्यस्येति[२] मन्यते । म० म० गङ्गानाथशर्ममहाशयस्य[३] तदनु म० म० उमेशमिश्रमहाशयस्य[४] च मते श्रीवत्समत्रापि खण्डयत्येवोदयनाचार्यः । द्वितीयप्रसङ्गविषये प्रायेणोदयन-सम्मतिरेव[५] श्रीवत्सपक्षेऽभ्युपेयते ।

अत्रास्मभ्यमित्थं प्रतिभाति—द्वितीयप्रसङ्गगतोत्तरवाक्यस्य न्यायवार्त्तिकानुसारित्वात् तत्रापि वार्त्तिकानुसारिणा परिशुद्धिकृता श्रीवत्समतखण्डनमेव कृतम्, न मण्डनम् । इतरथा हि समाधानावसरे वार्त्तिककृन्नामानुल्लेखे श्रीवत्सनामग्रहणे च न कापि युक्ति-र्दातुं शक्येति । एतच्च परिशुद्धिग्रन्थालोचनेन जायमानं विज्ञानमपि आचार्यस्य सर्वत्र प्रकरणसङ्गतिप्रदर्शनपटुत्वमुपपादयत् प्रमाणीकरोति । तृतीयेऽपि खण्डनमेव, श्रीवत्सस्य पूर्वपक्ष एव सर्वत्र स्थापनात्, परिशुद्धिकारस्य सर्वत्र प्रकरणसङ्गतिप्रदर्शनप्रतिज्ञानाच्च ।[६]

( घ ) अनन्तरम् ३।२।६६ सूत्रव्याख्याविषयेऽपि श्रीवत्सस्य नामोल्लिखितम्—

"नित्यैर्मनःप्रभृतिभिरेवानैकान्तिकम्, तेषां [७]पुरुषगुणप्रेरितभूतपूर्वकत्वाभावेऽपि पुरुषार्थक्रियासमर्थत्वादिति श्रीवत्सः । सत्यम्, कार्यत्वे सतीति विशेषणाद् दोषः ॥"

अत्रापि श्रीवत्सस्य निरसनमेव विहितम् परिशुद्धौ ।

( ङ ) ५।१।२६ सूत्रव्याख्यायामपि निर्दिष्टं श्रीवत्सस्य नाम—

"विभागोद्देशक्रमस्तु[८] नित्याऽनित्यसमलक्षणयोः किमर्थमिति श्रीवत्सप्रश्नेऽध्या-यान्तरे क्रमस्य सतात्पर्यतयेहापि तच्छङ्का स्यात्, तन्निवृत्त्यर्थमित्युक्तरम् । तेन हि न्यायप्राप्तः क्रमो न चात्र प्रयोजनप्राप्त इति गम्यते ॥"

---

१. दिनेशचन्द्रभट्टाचार्येण स्वग्रन्थे History of Navya-Nyāya in Mithilā नामके २१ पृष्ठे समुद्धृतोऽयमंशः । अत्रापि क्वचित्पाठभ्रंशः प्रतीयते ।
२. History of Navya-Nyāya in Mithilā, P. 21.
३. न्यायभाष्यखद्योते—३।२।२७ सूत्रव्याख्यानं ।
४. History of Indian Philosophy, Vol. II, P. 145.
५. History of Navya-Nyāya in Mithilā. P. 21.
History of Indian Philosophy, Vol. II, P. 145.
६ प्रकरणसङ्गतीस्तत्रैव दर्शयिष्यामः ।
ता. प. ११ पृष्ठे ( सरस्वतीभवन-ग्रन्थसंख्या-३३३११ ) ।
७. दिनेशचन्द्रभट्टाचार्यमहोदयेन समुद्धृतोऽमंशः, History of Navya-Nyāya in Mithilā, P. (22.)
८. ता० प०, १३-१४ पृष्ठयोः ( सरस्वतीभवन-ग्रन्थसंख्या-२०६६५ )

अत्र जातिविभागसूत्रे नित्यसमानन्तरमनित्यसमस्योद्देशः, लक्षणे पुनरनित्यसमस्य पूर्वं परस्ताच्च नित्यसमस्य निर्देशो नोचित इति श्रीवत्सप्रश्नं परिहरति परिशुद्धिकृत्।

( च ) अन्ते निग्रहस्थानोद्देशसूत्रे समासाभावमुपपादयन् पूर्वपक्षित्वेन रूपेण श्रीवत्सो निर्दिष्टः—

"प्रतिज्ञाहानिरित्याद्यसमासः स्वप्रयोजने[१] निग्रहस्थानानां परस्परानपेक्षितत्त्व-सूचनाय। जातिष्वप्येतत्समानमिति श्रीवत्सः। अत्रोत्तरम्—समशब्दाभ्यावृत्तौ सूत्र-गौरवाद् अनावृत्तौ तु संज्ञानुपपत्तेः ( जातिनिर्देशसूत्रे ) समासः॥"

## श्रीवत्सोदयनयोः सम्बन्धः—

सर्वत्रैव श्रीवत्सस्य निराकरणमेवाचार्येण विहितमिति विरोध एवानयोः सम्बन्धः। एतत्पुनर्महदाश्चर्यम्, यत् केचनाचार्याः मन्यन्ते[२] श्रीवत्समुदयनाचार्यस्य गुरुम्। यदि नाम श्रीवत्साचार्यः परिशुद्धिकृतो गुरुः स्यात्, कथमन्यत्रापि ग्रन्थे तस्य नामोदयनाचार्येण विस्मृतमेव स्यात्। अत्रापि परिशुद्धेः प्रथमे न निर्दिष्टोऽयं परिशुद्धिकृता। अपि चाऽस्य गुरुत्वे सर्वत्र 'अत्र श्रीवत्सः' इत्यादिरूपेण एकवचनान्तेन पदेन नामग्राहमुल्लेखो नैव कृतः स्यात्। 'श्रीवत्सवत्सलतयैव' इति तु काकूक्तिराचार्यस्योक्तिवैचित्र्यनिपुणस्य। श्रीवत्सस्याविचारितरमणीयां न्यायाचार्यवर्योक्तिखण्डनप्रवृत्तिमुपहसति न्यायाचार्य उदयनः। अज्ञानस्य पुनर्वात्सल्यप्रयोजकत्वमपि न शक्यमपलपितुमिति नूनं श्रीवत्सो नोदयनाचार्य-गुरुरपि तु कश्चनान्य एव विद्वान् न्यायाचार्याणां प्रतिद्वन्द्वी।

## श्रीवत्सो न न्यायग्रन्थव्याख्याता—

म० म० उमेशमिश्रमहाशयानां मतमेतत्[3] यत् श्रीवत्सेन काचन न्यायसूत्रस्य न्यायभाष्यस्य व्याख्या वा निर्मिता। परमत्र वयं नौचित्यमवगच्छामः। सूत्रकारमेव मुख्यतः स्वीयखण्डनविषयं कुर्वन्, तद्व्याख्यातारं च तदनु सोपहासमाक्षिपन् श्रीवत्सः कथं न्याय-सूत्रव्याख्याता न्यायभाष्यव्याख्याता वा स्वीकर्तुं शक्यः? सूत्रव्याख्याता भाष्यटीकादि-खण्डनं सम्भवदपि सूत्रकारस्यैव भूयोभूय उपहासपूर्णं निरसनशतः पूर्णतो वा न सम्भव-त्येवेति कश्चन न्यायशास्त्रविप्रतीपो बौद्धाचार्य एव तद्युगप्रभवोऽयं श्रीवत्साचार्य इति सम्प्रत्यनुपलम्भे स्पष्टप्रतिपत्तिजनकप्रमाणानामस्माकमभ्युपगमः

---

१. ता० प० १३-१४ पृष्ठयोः ( सरस्वतीभवन ग्र. सं० ३०६६५ ) २० पृ०

अत्र भट्टाचार्यमहाशयेनोद्धृतः पाठः स्पष्टतरः—"प्रतिज्ञाहानिरित्याद्यसमासो निष्प्रयोजनः। निग्रहस्थानानां परस्परानपेक्षत्वसूचनायेति चेत्? जातिष्वप्येतत् समानमित्यसमासप्रसक्तिरिति श्रीवत्सः। अत्रोत्तरम्—समशब्दाभ्यावृत्तौ गौरवात् अनावृत्तौ संज्ञानुपपत्तेश्च समासः॥"

History of Navya-Nyāya in Mithilā, P. 22

२. History of Navya-Nyāya in Mithilā, PP. 20-22.

History of Indian Philosophy, Vol. II, PP. 145. 145. 200.

३, तत्रैव १४७ पृष्ठे।

# शब्दब्रह्मवादस्योद्गमो विकासश्च

श्रीवेदानन्दझाः
प्राचार्यः
श्रीसिद्धेश्वरसंस्कृतमहाविद्यालयः, कलैयाया, नेपालः

सरस्वतीं परां विद्यां शुद्धां गीर्वाणवन्दिताम् ।
वन्दे बिन्दुस्वरूपां तां स्वराञ्जनसमन्विताम् ॥

निरन्तरं परिवर्तमानस्य नामरूपाभ्यां परिदृश्यमानस्य व्याकृतस्य जगतो मूलं नूनं किमप्यपरिवर्तमानं प्रत्यक्षानुमानप्रमाणाविषयम् "तत्सत्यं य आत्मा तत्त्वमसि श्वेतकेतोः" इत्यादिविधिमुखेन "नेति नेति" इति निषेधमुखेन वा श्रुतिप्रमागम्यमव्याकृतं निगूढं तत्त्वम् । यत् किल जगदध्यासालम्बनम्, यच्च केन्द्रबिन्दुर्जगतां स्थावरजङ्गमानां दिव्यादिव्यानाम्, ध्यानबिन्दुश्च निगमागमश्रवणमननंनिदिध्यासनोद्भूतसंविदां स्थिरधारणावतां निरुद्धैकाग्रचिन्तानाम्, विवादास्पदं च क्षिप्तमूढविक्षिप्तानां जगज्जालतन्तुप्रतिबद्धानां विषयरसतृष्णाऽपहृतेन्द्रियहरिणानाम् ।

अग्रे किल जगति जगदुपादानं तत्तत्त्वं कश्चन विवेचनचणः परिचिकाय चेत्, तर्हि स बभूव, प्रथमोऽघमर्षणाद्यभिमन्त्रितगङ्गायमुनासरस्वतीरसक्षालितोऽश्वत्थवटप्लक्षन्यग्रोधरसालतमालादिविटपच्छायतटकुटीरनिषण्णो हिमालयप्रसूतार्यावर्तमहर्षिगणो महाशङ्खवेदमन्त्रोद्घोषसार्थकीकृतदिग्दिगन्तः ।

यस्मिन् किल स्मृतिसृतिमुपगते इतिहासगवेषितयुगेऽन्येऽज्ञानमहामोहगभीरगह्वरे पाशवजीवनं व्ययन्ते स्म, तस्मादतिदवीयसो मननावधितटमप्यपगताज्जगदुद्भवानादियुगादेव क्वचिद् भगवत्या भागीरथ्याः, क्वचित् कालिन्द्याः, क्वचित् सरस्वत्याः, क्वचिद् गोदावर्याः, क्वचित् कावेर्याः, क्वचिन्नर्मदायाः, क्वचिद्धिमालयस्य क्वचिच्च विन्ध्यस्योपतटं तपःसमाहितचेतस आर्यावर्तभूभुवो मानवा उदयगिरिमधिरूढस्य वेदसूर्यस्योपस्थानं कुर्वाणा अमरसन्देशपीयूषवर्षिमन्त्रध्वनिभिर्हिंस्रेष्वपि शमादीन् मानवीयभावानाप्यापयन्तो मानवसभ्यताप्रभातवायुमण्डले महर्षिजीवनमुद्बोधयन्तो बभूवुः । येषां साधनाप्रतिभातानि छन्दांसि सूत्राणि, स्मार्तवाङ्मयानि प्रस्थानत्रयीसमन्वितदर्शनानि पुराणानि चाद्यापि स्वस्ववाग्विभवोपदेशैः परमरहस्यं तत्त्वं प्रकाशयन्ति, भारतभूभव्यभालमुदयशैलं प्रख्यापयन्ति । तानि तानि दर्शनानि जगतो विषमामैहिकामुष्मिकसमस्यां समाधातुं तमध्यात्मदीपं सन्दीपयन्ति, येन मानवसमाजो ज्ञातुमिदं प्रभवेद्, यत् स कोऽस्ति, कुतोऽस्ति, क्व चास्ति तस्य पर्यवसानम् । निश्चिक्युश्च सर्वेषां वेदान्तवाक्यानामद्वितीयब्रह्मण्येव तात्पर्यम्, प्रणिन्युश्च तत्स्वरूपताऽऽप्तये विभिन्नजिज्ञासुबुद्धिमपेक्ष्य विभिन्नप्रणालीभिर्विभिन्नमार्गान् ।

"तमेतमात्मानं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन दानेन तपसानाशकेन" इति। परं पर्यवसानं तेषां सर्वेषां तस्मिन्नेवाद्वये परमात्मतत्त्वे सजातीयविजातीयस्वगत-भेदशून्ये सत्यज्ञानानन्दात्मके तत्त्वमस्यादिमहावाक्यलक्ष्ये।

तत्राग्रे वैदिकब्राह्मणेन "अग्नीषोमात्मकं जगत्" इति सिद्धान्तयता अग्नीषोमात्मक-सौरसंवत्सरयज्ञप्रजापतिरेवेदं सर्वं जगदिति व्यवस्थापयता "प्रजापतिस्त्वेवेदं सर्वं यदिदं किञ्च" इति निर्दिदिशे। संहिताभिश्च जगन्नियन्तृतया देवतारहस्येन इन्द्राग्नीषोमवरुण-हिरण्यगर्भादिनामभिर्जगदालम्बनं तत्त्वमेकमेवोपवर्णितम्—

"एकं सद्विप्रा बहुधा वदन्ति, अग्निं यमं मातरिश्वानमाहुः" ( ऋ० सं० ) इति। प्रतिपदमनुभूतं पर्यालोचनया च स्पष्टं जगच्चक्रचङ्क्रमणं विविच्य तन्मूलं विचिन्वानानां पुराणमुनीनां निर्विकल्पाविवेकदृष्टिर्निपतिता ध्रुवे तस्मिन्नध्रुवजगच्चक्रनेमिभूतेऽद्वय-परतत्त्वे। तदिदमेव रहस्यं सुस्पष्टं बृहदारण्यकोपनिषदि 'तद्यथा रथनाभौ रथनेमौ चाराः सर्वे समर्पिताः, एवमेवास्मिन्नात्मनि सर्वाणि भूतानि, सर्वे देवाः, सर्वे लोकाः, सर्वे प्राणाः, सर्व एत आत्मानः समर्पिताः" इति।

तथ्यमेवेदं यद् ध्रुवालम्बनं विना कुतोऽध्रुवस्य प्रतिष्ठा क्षणमपि प्रत्ययास्पदयोग्या। अतो मन्तव्यमेवेदं यदद्वयं ब्रह्मैव जगतः प्रतिष्ठा। स्वप्रतिष्ठब्रह्मणः प्रतिष्ठयैव जगत् प्रतिष्ठितम्। ब्रह्मणः प्रतिष्ठां विना निरालम्बनं जगद्गतिविकलं सत् कल्पनापदवीमपि नाधिगच्छेत्। स्थितितत्त्वमर्यादयैव गतिः प्रभवति। यथैकेन पदा यदा स्थितिर्भवति, तदा गतिः सम्पद्यते। एकेन पदा स्थितिं विना गतिः पदमपि न प्रपद्यते। यदि गतितः स्थितिर्व्यतिरिच्येत चेत्, तर्हि गतिरपि स्थितिस्वरूपतामापद्यत इति सुविनिश्चितः सिद्धान्तः। अतः स्थितितत्त्वे ब्रह्मण्येव गतिशीलस्य जगतः स्वरूपं प्रतिष्ठितम्। अत एव "ब्रह्म-पुच्छं प्रतिष्ठा" इति श्रुत्युक्तिः। अत एव तैत्तिरीये "यतो वा इमानि भूतानि जायन्ते" इत्युपदेशः। "तमेव भान्तमनुभाति सर्वम्" इति चोद्घोषः। एतावता स्पष्टमिदं प्रति-भाति यद् विचालिनो जगतो मूलमवश्यमेव किमप्यविचाल्यनपायोपजनं विकारि कूटस्थं तत्त्वम्। तत् किल—नादः, बिन्दुः, शक्तिः, विज्ञानम्, चेतनः, ईश्वरः, कर्ता, विष्णुः, शिवः, निराकारः, साकारः, निर्गुणः, सगुणो वा कथमपि निरूपितं भवेत्, किन्तु नाममात्रे विवादं विहाय केनापि रूपेण गतिशीलस्य जगतो नियामकं ध्रुवं तत्त्वं तु सर्वथा मन्तव्य-मेव भवेद् विचारदृशां विदुषाम्। तदेव 'ब्रह्म' इत्याख्यायते। तदेव जगद्विवर्तोपादनाम्। तनैवेदं सर्वं जगदभिव्याप्तम्। अत एव "सर्वं खल्विदं ब्रह्म" इत्युपनिषदां राद्धान्तः।

एतस्याद्वैततत्त्वस्य बहुनामनिकेतस्य संकेतः, स्मृतितटमप्यपक्रान्तादनादिकालादेव ऋक्संहितायां यत्र तत्र कोरकितोऽपि नासदीयसूक्तेषु प्रस्फुटितः सुविकसितश्च समन्ता-दुपनिषदामुपदेशैः। तच्च सर्वनिमित्तोपादानं सर्वाधिष्ठानं तत्त्वं प्रत्यक्चैतन्याभिन्नं बहुशो लक्षितम्, "यत् साक्षादपरोक्षाद् ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, प्रज्ञानं ब्रह्म, ज्ञानघन एव" इत्यादि श्रुतिशतात्।

२

तत् किल प्रत्यक् चैतन्यं शब्दब्रह्म नवितुमर्हति, प्रत्यक्षानुमानोपमानाद्यविषयत्वे सति शब्दानुविद्धशाब्दापरोक्षत्वात्, प्रत्यक्षादिसकलप्रत्ययवत्। अभिहितं च वाक्यपदीयब्रह्मकाण्डे योगिराजेन भर्तृहरिणा शब्दब्रह्मोद्घोषकारिणा—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति। इदमेव वेदानां वेदत्वं यत्ते प्रत्यक्षाद्यविषयं ब्रह्म वेदयन्ति। उक्तं च—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥ इति।

यत्र तत्र मन्त्रोद्घोषैः प्रकटीकृतोऽयं शब्दब्रह्मवादः सुव्याख्यातश्च बहुश आगमनिचयेषु, अनुभूतश्च कुण्डलिनीनादबिन्दुतया निवातध्यानदीपेषु प्रतताविच्छिन्नप्रातिभप्रभावितानेषु।

प्रत्यक्षाद्यविषयं तत्त्वम् 'विदन्त्यनेन' इति करणव्युत्पत्त्या ब्रह्मज्ञापको मन्त्रात्मकः शब्दराशिर्वेदः। 'वेदनं वेदः' इति भावव्युत्पत्त्या योगं युञ्जानानां मुनीनां प्रातिभज्ञानराशिरेव वेदः। उभयव्युत्पत्त्या तस्यैकस्यैव शब्दब्रह्मणो बोध्यबोधकत्वप्रतिपादनादुभयोरभिन्नत्वं बोध्यते। वस्तुतो वाच्यं वाचकत्वम्, लक्ष्यलक्षकत्वम्, ग्राह्यग्राहकत्वं चेति सर्व एवैवंविधाभेदव्यवहारा लोकदृष्ट्या कल्पिता एव। अत एव 'शब्दार्थयोस्तादात्म्यम्' इति सिद्धान्तोऽपि सुप्रतिष्ठितः।

उक्तं च—"ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।" इति। तथा चानेन वेदशब्दनिर्वचनेन शब्दब्रह्मवादः प्रस्फुटः। अस्यैव, जगत्कारणत्वं जगद्व्यापकत्वं च कल्पितम्। तथाहि भौतिकाधिदैविकाध्यात्मिकभावनाभिर्विविधानि तत्त्वानि वाचामुपव्याख्यातानि श्रुतिषु। तथाहि ऋक्संहितायां नवमे मण्डले—

तिस्रो वाच ईरयति प्रवह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम्।

सौरसंवत्सरयज्ञप्रजापतिवह्निः, प्राणाग्निर्वा तिस्रो भौतिकादिभेदजुषः परापश्यन्त्यादिभेदजुषो वा वाचः प्रेरयति=वैखर्यात्मना जगदात्मना वा प्रादुर्भावयति। यां च ऋतस्य=सत्यस्य सत्यात्मकलोकस्य धारयित्रीम्, अथवा अग्नीषोमात्मकयज्ञप्रजापतेर्धात्रीं प्राहुः, ब्रह्मणश्च मनीषाम्=मानससृष्टिकारिणीं परां शक्तिं च प्राहुः। अत्रैवार्थे—

"परास्य शक्तिर्विविधैव श्रूयते" इत्यागमोऽपि। तत्र भावाभिव्यक्तिसाधनतया लोकेऽर्थप्रकाशको यः कश्चन शब्दः प्रयुज्यते, स वागित्यभिधीयमानः 'भाषा' इति प्रोच्यते। स्थूलसूक्ष्मसकलप्रभेदवती तु वाक्। अर्थबोधकशक्तिमत्त्वात् स्त्रीत्वेनाभिसंधानम्। जिह्वाद्यभिघातेनोच्चार्यमाणत्वाद् भाषाशब्देन व्यपदेशः। मध्यमारूपेण परादिचतुष्टयसन्धिस्थानत्वाद् वाक् सन्धिरित्युच्यते। "वाक् सन्धिः जिह्वा सन्धानम्" इति तैत्तिरीयात्, "वाक् कस्माद् वचेः" इति निरुक्ते यास्काचार्यनिर्वचनाच्च।

यद्यपि भाषाया उत्पत्तिविषये "अनुकरणमूलकतावादः, मनोभावाभिव्यञ्जकतावादः, है हे अथवा यो हो हो वादः, डिङ डैङ वादः, विकासवादः" इत्यादिका बहवो वादा विवादास्पदा भाषावैज्ञानिकैराधुनिकैः पाश्चात्त्यभौतिकविज्ञाननीलनिकषोपनेत्रपिहितनयनैर्दिव्योत्पत्तिवादं तिरस्कृत्य सन्ति स्वीकृताः। किन्तु "दैवीं वाचमजनयन्त देवाः" इति ऋक्सूक्ताद् दिव्योत्पत्तिवाद एव सुसम्मतः पन्थाः। आध्यात्मिकाधिदैविकभावाभिव्याप्तं भूतभौतिकमभितो विवेचयतामार्यावर्तमहर्षीणां तत्सन्ततीनां च कथमिमे वादाः कल्पनयापि जिह्वाजल्पयोग्याः स्युः। अलं कटाक्षविक्षेपेण।

बहिरन्तश्च ब्रह्माण्डभाण्डे प्रतिध्वनिताऽपि कण्ठताल्वादिष्वभिव्यक्तेयं वाक् सकलजगद्व्यवहारप्रवर्तिका। न च वाचमन्तरेण क्षणमपि ब्रह्माण्डकण्ठे व्यवहारनिःश्वासः। वागेव धर्माधर्मयोः, सत्यानृतयोः साध्वसाध्वोश्च विज्ञापिका। उक्तं च—

"यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति" ( छान्दोग्य ७ अ. ३ )।

अत एवैतस्मिन् प्रपाठके 'वाचं ब्रह्म' इत्युपास्स्व इत्यभिप्रायकम् 'वाचमुपास्स्व' इत्युक्तम्। "हिरण्यगर्भः समवर्तताग्रे" इत्यादिना प्रथमपुरुषस्य हिरण्यगर्भस्य प्रणवात्मकतयैव निरस्तसमस्तपुंदोषशङ्काकलङ्कानादिसम्प्रदायाविच्छेदप्रपवर्तितपूर्वसर्गसिद्धसमानानुपूर्वीकसजातीयोच्चारणसापेक्षोच्चारणविषयापौरुषेयवेदवाचा जगत्सृष्टिसामर्थ्यम्। "विरूप नित्यया वाचा, यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदान् प्रहिणोति तस्मै" इत्यादिश्रुतेः। सृष्टिकाले "सत्यं ज्ञानमनन्तं ब्रह्म" 'इत्यैतल्लक्षितं सच्चिदानन्दात्मकं जगत्कारणं परं ब्रह्म सर्वप्रथमं कार्यब्रह्म हिरण्यगर्भरूपेण जायमानं पूर्वस्यां दिश्यादित्यात्मकतेजसा प्रादुर्बभूव। हिरण्यगर्भस्यादित्यात्मकमेतत्तेजः 'वेन' इत्याख्यायते। स वेनः सकलदिक्सीमतः प्रारभ्य सुरुचो दिव्यान् सर्वान् लोकान् आवृत्यातिष्ठत्। स स्वप्रभया तमो निराकृत्य पार्थिवलोकान् अन्तरिक्षलोकान् सर्वानाच्छाद्य सर्वस्य जगतोऽभिव्यापकः सन् सतो नामरूपात्मकस्य दृश्यप्रपञ्चस्य, असतोऽदृश्यप्रपञ्चस्य योनिम् = प्रकृतिमप्याच्छादयत्। तदुक्तम्—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥

( अथर्व० का० ५, अ० २, सू० १ )

अयं वेनः शब्दात्मक एव बोध्यः। प्रणवस्य 'वेन' इत्याख्यासत्त्वात्।

वर्णपदवाक्यात्मना सरणवत्त्वाद् वैखरीवाक् 'सरस्वती' इत्यप्याख्यायते। लोके सकलार्थद्योतनाद् वागधिष्ठात्री देवी शक्तिश्च सरस्वती इति निरुच्यते। सा वाग्देवी ब्रह्मस्वरूपवेदमन्त्रात्मनाऽभिव्यक्ता समुपासकैर्ब्रह्मशक्तित्वेन संपूजिता परमेष्ठिनी 'ब्राह्मी' इत्यपि निर्वर्ण्यते। सा चानुपासकानां दुःखदातृत्वाद् घोररूपा, उपसकानां सकलार्थप्रकाशनेन सुखशान्तिप्रदातृत्वादघोरा, शुद्धप्रकाशस्वरूपा। उक्तं च—

इयं या परमेष्ठिनी वाग्देवी ब्रह्मसंशिता।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः॥
( अथर्व० का० १६ अ. १ सू० १० )

अभिव्यक्तवर्णपदवाक्यात्मिका वाग्देवता नहि केवलं भूभुवामेवेष्टार्थप्रकाशिका, अपि तु दिविषदां सोमसदां च। "वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते", स्वाहा वै शरत्, स्वधा वै पितृणामन्नम्" इत्यादिसमाम्नानात्। अत एव यजुषि स्वाहाकारस्य स्वधाकारस्य च वाचो देवपितृहव्यकव्यस्वरूपत्वं प्रतिपादितम्। देवानां स्वाहाकारेण पितृणां च स्वधाकारेण यज्ञेषु तृप्तिः।

"ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति।" ( यजु० अ० २. सू० ३० )

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधास्थ तर्पयत मे पितॄन्॥

इति श्रवणात्।

यज्ञे सकलकर्मकाण्डप्रवृत्तये हविर्भागिदेवानाह्वयितुं याज्ञिका वाग्देवतां सरस्वतीमेव मन्त्रोपस्थानैरामन्त्रयन्ति। ते देवा आमन्त्रिताः सन्तो मन्त्रविग्रहधारिणस्तत्र सन्तिष्ठन्ते। वाग्देवता सरस्वती च स्वाहा स्वधाकारैर्देवान् पितॄन् मादयति—इति ऋक्संहितायामपि दशमे मण्डले प्रोच्यते—

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने।
सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वीर्यं दात्॥

सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती। इत्यादिसूक्तैः।

अथर्वणि च--इदं ते हव्यं घृतवत् सरस्वतीदं पितॄणां हविरास्यं यत्। ( का० ७ अ० ६ सू० २ ) इत्यनेन वाग्देवतायाः पितृहविःप्रासकत्वमभिहितम्।

स्वाहासि वै पितृगणस्य च तृप्तिहेतु-
रुच्चार्यसे त्वमत एव जनैः स्वधा च॥

इति मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशत्यामप्युक्तम्।

स्वाहां तु तृप्तिजननीमसुरेश्वराणाम्।
भूयः स्वधां पितृगणस्य च तृप्तिहेतुम्॥

इति देवीभागवतेऽपि प्रतिपादितम्।

इदमत्र निदानं यत् "नामरूपे व्याकरवाणि" इति श्रुतिनिर्दिष्टदिशा परमात्ममनः ( सोमात्मक ) संकल्पप्रभवत्वात् सकलं जगत् सोमात्मकम्, प्राणाग्निहिरण्यगर्भसमीरितत्वात् प्रणवरूपेण वागात्मकं च। तेनापि जगतोऽग्नीषोमात्मकत्वं प्रतितिष्ठति।

तथाहि –"वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्" इत्यैतरेयात् सुस्पष्टमिदं प्रतिभाति यत् प्राणाग्निविद्योतितं मनो वाग्रूपतामापद्य वाचि प्रतिष्ठितं भवति।

ततश्च वैखर्यात्मना मध्यमात्मना वाऽभिव्यक्ता वाग् बाह्यं सकलमर्थजातं प्रकाश्य व्याकृतं स्वरूपं विलाप्य सकलार्थसूक्ष्मवासनोपासिता सूक्ष्मसूक्ष्मतमा सम्पद्यमाना क्रमशो मनसि प्राणाग्नौ च प्रतिष्ठिता भवति, तत्सूत्रेण च सा वाग् वाङ्मयेऽग्नीषोमात्मकेऽपि जगति प्रतिष्ठिता भवति। तत्र प्राणाग्नेः सोमस्य च समप्राधान्येऽपि स्वाहाकारेणाग्नितत्त्वप्रधाना, स्वधाकारेण च सोमतत्त्वप्रधाना सम्पद्यमाना मन्त्रवाग्हुतमर्थजातं विभज्यादित्यमण्डलाधिष्ठितान् मन्त्रविग्रहानाग्नेयान् देवान् सोमोर्ध्वभागाधिष्ठितान् मन्त्रविग्रहान् सौम्यान् पितॄंश्च प्रापयति, अतः सिद्धमिदं यद् वागेव सर्वव्यवहारप्रवर्तिका, वागेवेदं च सर्वं सौरसंवत्सरयज्ञात्मकं जगत्।

इदमेव सुस्पष्टं समामनति भगवती श्रुतिः शतपथब्राह्मणे सोमयागनिरूपणे--

'अथ यत् स्वाहा स्वाहेति करोति। यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रोएव वाचं यच्छति, वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते'।

( का० ३, अ० १, ब्रा० ४ )

आस्तां तावदियं वाग् जगद्व्यवहारनर्तिका, किन्तु सा जडा प्राकृता काष्ठपुत्तलिकेव भवितुमर्हति, न हि चेतना चित्स्वरूपा वा, वर्णपदादिभावेन परिणामित्वात्, स्तुति-निन्दा विप्रलम्भ-वाक्यात्मना च सुखदुःखमोहस्वभावत्वादिति चेन्न, नित्यत्वात् श्रुतिषु बहुशो ब्रह्मात्मत्वेनोपगीयमानत्वात्, चित्स्वरूपत्वात्, जगज्जन्मादिविवर्तनिमित्तोपादानत्वात्, जगति समन्वयात्, अक्षरत्वश्रुतेश्च।

तथाहि ऋषिसंहितायां दशमे मण्डले श्रूयते--

सक्तुमिव तित उना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि॥

अनेन सूक्तेन शब्दसंस्कारवतां ध्यानवतां प्रज्ञानेन 'अत्र' इति निर्दिष्टे शब्दब्रह्मणि सायुज्यलक्षणा मुक्तिरुपदिश्यते। सा च शब्दस्य ब्रह्मत्वे एव संगच्छते, नान्यथा।

अग्रे च तत्रैव 'उत त्वः पश्यन्न ददर्श वाचम्' इत्यादिना शब्दज्ञमशब्दज्ञं चोपलक्ष्य शब्दब्रह्मसाक्षात्कारासाक्षात्कारता प्रतिपादिता।

"वाचा विरूप नित्यया, अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" इत्यादिनिगमागमैः; "तदशिष्यं संज्ञाप्रमाणत्वात्, सिद्धे शब्दार्थसम्बन्धे, नित्येषु शब्देषु कूटस्थैरविचालिभिः" इत्यादिसूत्रकारवार्त्तिककारभाष्यकारवचनैः; "नित्याः शब्दार्थसम्बन्धाः" इति भर्तृहर्य्युक्त्या च शब्दस्य नित्यत्वं सिद्धमेव।

"भद्रैषां लक्ष्मीर्निहिताधिवाचि" इत्यनेन वाचि भासनशीलचिच्छक्तेर्विराजमानत्वप्रतिपादनात् चिद्रूपत्वमपि। अत एव शक्तिप्रधानतयोपासनाबुद्धया शब्दब्रह्मणः 'सरस्वती' इत्यपराख्या। चन्द्रचन्द्रिकयोरिव शक्तिशक्तिमतोरभेदः।

आधाननिरूपणे शतपथब्राह्मणेऽपि श्रूयते--"यन्नर्चा न साम्ना न यजुषा······वाग्वै ब्रह्म" इति। इयं श्रुतिर्वाचो ब्रह्मत्वं स्पष्टमेव बोधयति। अत एव छान्दोग्ये "वाच-

मुपास्स्व" इत्युक्तिः। अत एव मन्त्रब्राह्मणात्मकवेदस्य तत्र तत्र 'ब्रह्म' इत्याख्या सुप्रसिद्धैव। "तस्य निश्वसितं वेदाः" इत्यागमेनालङ्कृतवचनोपन्यासेन शब्दराशेर्वेदस्य निःश्वासत्वप्रतिपादनाद् ब्रह्मस्वरूपाधायकत्वं ध्वनितम्। "तेने ब्रह्म हृदा य आदिकवये" इत्यनेन श्रीमद्भागवते आदिकवये हिरण्यगर्भाय ब्रह्मपदवाच्यवेदस्य हृदयेन विस्तारं प्रतिपादयता भगवता वेदव्यासेन शब्दस्य ब्रह्मस्वरूपता हृदयदेशाभिव्यङ्ग्यस्फोटस्वरूपता च सुनिरूपितैव।

अनादिनिधनशब्दराशेर्ब्रह्मणो वेदस्य यज्ञप्रवर्तितक्रियोपाधिकभागचतुष्टयेन होतृत्वमुद्गातृत्वमध्वर्युत्वं ब्रह्मत्वं च विभजन्त्या सौरसंवत्सरयज्ञात्मकजगन्नियतृत्वं च बोधयन्त्या श्रुत्या जगज्जन्मादिकारणत्वमपि प्रकटीकृतमेव। तथा च समामनति भगवती श्रुतिः—

ब्रह्म होता ब्रह्म यज्ञा ब्रह्मणा स्वरवो मिताः।
अध्वर्युर्ब्रह्मणो जातो ब्रह्मणोऽन्तर्हितं हविः॥
( अथर्व० का० १९ अनु० ५ सू० ६ )

अनेन सूक्तेन कृत्स्नस्य कार्यकारणप्रपञ्चस्य शब्दब्रह्मात्मकत्वप्रतिपादनाद् होतृत्वादिना तस्य सर्वसमन्वितत्वमुद्घोषितम्। अत एव काम्यते—

"ब्रह्मा ब्रह्म दधातु मे" ( अथर्व का० १९, अनु० ५, सू० १० ) ब्रह्मा हिरण्यगर्भः, ब्रह्म = शब्दब्रह्मात्मकं वेदविज्ञानं श्रुताध्ययनजन्यं तेजो वा मह्यं दधात्वित्यर्थः। अस्य शब्दब्रह्मणो न केवलं जगदात्मकत्वम्, यज्ञात्मकत्वमेव वा, अपि तु यज्ञाधिष्ठातृजगन्नियन्तृसर्वदेवमयत्वमपि।

"स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्" ( तै० आ० १०।११।२ ) इति श्रुतेः। अत्राक्षरश्रुतेः स्वराट्श्रुतेश्च शब्दः प्राकृतः परिणामी नैव भवितुमर्हति, स्वेनैव राजमानत्वात्, क्षरणपरिणामादिषड्विधभावविकारशून्यत्वात्, इन्द्रादिदेवस्वरूपत्वेन चेतनत्वाच्च। "अक्षरं न क्षरं विद्यादश्नोतेर्वासरोऽक्षरम्" इति भाष्यवार्त्तिकोक्तेश्च।

किमुतान्यत्, सनक्षत्राः सलोकपालाः सूर्यचन्द्रादिकाः सर्वे ग्रहाः सर्वे लोकाश्चानेनैव शब्दब्रह्मणा गृहीता विधृताश्च सन्ति। तथाहि शतपथब्राह्मणे सोमयागनिरूपणे निरुच्यते—

"वागेव ग्रहः। वाचाहीदं सर्वं गृहीतं किमुतद्यद्वाग्ग्रहः। नामैव ग्रहः। नाम्ना हीदं सर्वं गृहीतम्।"

अत्रविषये भगवान् भाष्यकारो नागराजोऽपि महता नादेन सहस्रफणैरुद्बोधयन् निर्विकल्पमुद्घोषयति—"सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः" इति।

अत्र ब्रह्मराशेर्वेदितव्यत्वप्रतिपादनेन निःश्रेयसत्वं परिलक्ष्यते। तच्च शब्दस्य ब्रह्मस्वरूपतायामेव। अक्षरसमाम्नायस्य ब्रह्मराशित्वमुपदिष्टम्। राशिशब्दस्य ज्वालावाचकत्वम्। यथा दीपराशिरिति दीपज्वालार्थे प्रयुज्यते। तथा चाक्षरसमान्नायस्य ब्रह्मज्वालात्वप्रति-

पादनेन स्वप्रकाशत्वं स्वतः प्रमात्वं चोपपद्यते। सूर्यचन्द्रनक्षत्रादिसकलज्योतिषां भासकत्वात् तत्प्रतिमण्डितत्वमुपदिश्यते।

अस्मादेवाक्षरसमाम्नायाद् वटबीजादिव ब्रह्माण्डप्ररोहः। तस्मादेव सर्वेऽर्थाः पुष्पिताः फलिताश्च। वेदवेदाङ्गादिसकलशास्त्रविस्तारस्तस्यैव ब्रह्मराशेः। शब्दब्रह्मराशिः किं किं न साधयति?

निषादर्षभगान्धारादिस्वरसन्दोहसरसहृदया, नवरसनिमेषलेशवशीकृतसकललोका, वेणुवीणाझंकारसारसमाकर्षितसंसारा, मुरजदुन्दुभिध्वानतालकलोत्तोलितत्रिभुवनतला, श्रीरागानुरञ्जितमुखमण्डला, वसन्तरागोल्लसितकुसुमाकरशेखरा, दीपकरागोद्दीपितोद्दामजगद्दाहिदावानलप्रतप्तकाञ्चनकलेवरा, भैरवरागोद्‌गतप्रभातकिरणारुणितशरीरा, मेघरागनिनदद्रवितमकरन्दस्यन्दशिशिरशीकरासारकरम्बितपयोधरा, भैरवीवागीश्वर्यादिविविधरागिनीमुखरितचरणनूपुरा, ललामनिटिलालङ्कारकिङ्किणीनिक्वाणकणितब्रह्माण्डकोशा, शान्ता, सुशीला, सुभगा, वाग्विभवा, भव्या, भुवनेश्वरी, त्रिपुरसुन्दरी, वागीश्वरी, ऋक्प्रसूता, यजुर्वसनसज्जिता, समुचितारोहावरोहक्रमसुसंगठिता सामसंहिता केषां न सचेतसां चेतांसि समाकर्षति सहसा। सैव स्वहृदये नित्यमिन्द्रोपेन्द्रमहेन्द्रान् सन्धारयति। सैव स्वनिमेषे प्रभया सूर्यचन्द्रौ प्रकाशयति। सैव स्वदेहे लीलया सुरसिद्धसाध्योरगगन्धर्वमानवदानवान् विविधवर्णद्विपदचतुष्पदादींश्च विस्तारयति। तारयति च परमया करुणया तापत्रयाच्चराचरनिचयानुच्चावचान्।

अत एव नु स्तोतृभिः प्रपन्नतया नित्यमभ्यर्थ्यते चेयमेवम्—

स्तुता मया वरदा वेदमाता
प्रचोदयन्तां पावमानी द्विजानाम्।
आयुः प्राणं प्रजां पशुं कीर्तिं
द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा व्रजतु ब्रह्मलोकम्।
( अथर्व का० १९, अनु० ७, सू० १२ )

अर्थाद् वेदमाता आयुरादिकमिष्टफलं दत्त्वा ब्रह्मलोकम् = श्रोत्रग्राह्यशब्दाकारतां विहाय परात्मकब्रह्मस्वरूपतां प्रयातु।

अत एव—

'सहस्रधा पञ्चदशान्युक्था
यावद् द्यावापृथिवी तावदित्तत्।
सहस्रधा महिमानः सहस्रं
यावद् ब्रह्म विष्ठितं तावती वाक्॥

इति ऋक्संहितापि वाचो ब्रह्मतावत्त्वं प्रतिबोधयति।

अपि च पूर्वार्चिके—(प्र० २, अर्धप्र० २)।

'त्यमुवः सत्रासाहं विश्वासुगीर्ष्वायतम्, आच्यावयस्यूतये' इति सामसंहितापीन्द्रस्य वागायतनत्वं प्रतिपादयति।

'इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।'

( अ० १२, सू० ५६ )

इति यजुरपि इन्द्रस्य विविधात्मना समेधमानत्वे गिरामेव हेतुतां निबध्नाति । 'वाग्बुद्धिविद्याज्ञानाधिष्ठात्री च परमात्मनः विषयज्ञानवाग्रूपा प्रतिविश्वोपजीविनी' इत्याद्युक्तिभिः—

श्रीमद्देवीभागवतेऽपि भगवत्या वाग्देव्याः सत्यज्ञानात्मकत्वमभिधीयते—

'भूतं भविष्यत् प्रस्तौति सह ब्रह्मैकमक्षरम् ।
बहु ब्रह्मैकमक्षरम्.............................॥'

इति-ऋचा भूतभविष्यदादिकालत्रयकवलितस्य सर्वस्य जगतोऽक्षरपदवाच्यशब्दब्रह्मात्मकत्वं सुव्यक्तमेवोपदिश्यते ।

"पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः सामरसः साम्न उद्गीथो रसः ।
स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥"

इति छान्दोग्योपनिषदा सर्वेषामेषां भूतानां पृथिव्यादिक्रमेणोत्तरोत्तरं रसत्वं प्रतिपादयन्त्या 'उद्गीथ' पदवाच्यस्योंकारस्य निखिलनिष्कर्षतया परमरसतमत्वं निबोध्यते । अत एव 'ओम्' इत्येतस्मिन् परमात्मप्रतीके प्रणवेऽक्षरे ब्रह्मभावनया दृढैकाग्र्यलक्षणामुपासनामपि समामनति—"ओमित्येतदक्षरमुद्गीथमुपासीत" इति ।

माण्डूक्योपनिषदि च—जाग्रत्स्थानवैश्वानरेण 'अ'कारेण प्रथमपादेन, स्वप्नस्थानतैजसेन 'उ' कारेण द्वितीयपादेन, सुषुप्तस्थानप्राज्ञेन 'म' कारेण तृतीयपादेन, अचिन्त्याव्यपदेश्यघनेन च, तुरीयपादेन चतुष्पाद् ओङ्कार आत्मा निरूपितः ।

'ओमित्येतदक्षरमिदं सर्वम्' इत्यादिना च तस्य जगति समन्वयश्च प्रदर्शितः ।

देवीभागवते मार्कण्डेये च पुराणे 'अ, उ, म' इत्येतेषां सात्त्वराजसतामसत्वम्, विष्णुब्रह्महरात्मकत्वम्, अर्धमात्रायाश्च मूर्तित्रयाधिष्ठानतया शक्तिस्वरूपत्वमुपपादितम् ।

श्रीमद्भगवद्गीताप्रस्थानेऽपि—"प्रणवः सर्ववेदेषु, अक्षरं ब्रह्म परमम्, यदक्षरं वेदविदो वदन्ति, अव्यक्तोऽक्षर इत्युक्तः, वेदानां सामवेदोऽस्मि, त्वमक्षरं परमं वेदितव्यम्, क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते, ओमित्येकाक्षरं ब्रह्म" इत्यादिभिर्बहुभिर्वचनैः शब्दब्रह्मवादः सुदृढीकृतः ।

शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ।
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः ॥

( कै० सं० अ० १३, श्लो० ६१ )

इत्यनेन वाच्यवाचकयोर्भेदमपाकुर्वाणेन श्रीशिवमहापुराणेन जगतः शब्दब्रह्मात्मकता व्यक्तमुज्जोघुष्यते ।

ओमित्येतत्त्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः ।
विष्णुर्ब्रह्मा हरश्चैव ऋक्सामानि यजूंषि च ॥

( अ० ४२, श्लो० ८ )

इत्यनेन मार्कण्डेयपुराणेनापि प्रणवस्य सर्वलोकसर्वदेवसर्ववेदस्वरूपत्वमगादि ।

"इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितम्"

इत्यनेन तेनैवाक्षरस्य शब्दब्रह्मण ओंकारसंज्ञा देध्मीयते । शब्दब्रह्मणो जगत्सृष्टि-निदानत्वे मन्वादिस्मृतयोऽपि प्रमाणम् । तथाहि तत्र भगवान् मनुः सृष्टिप्रक्रियां व्याचक्षाणः प्राह यत्—परमात्मसमुद्भूतः प्रणवपुरुषो हिरण्यगर्भः सृष्ट्यादौ वेदशब्देभ्य एव सर्वेषां नामानि कर्माणि च व्याकार्षीत् । उक्तं च—

सर्वेषां स तु नामानि कर्माणिं च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥

( मनुस्मृतिः, अ० १, श्लो० २१ )

ब्रह्मसूत्रप्रस्थाने तत्र भगवान् बादरायणोऽपि शब्दपूर्विकामेव सृष्टिं सम्मनुते । तथाहि तत्र—इन्द्रादिदेवानामप्यनित्यविग्रहस्वीकारे तेषां सादित्वे तत्प्रतिपादकवैदिकपदा-नामपि सादित्वापत्तौ वेदापौरुषेयत्वव्याघातापत्तिः स्यादित्याशङ्कायां समाधानमाह—

"शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति ।

अर्थाद् नास्ति पूर्वोक्तो विरोधः, यतो हि अतः = नित्यसिद्धवेदादेव जगतः प्रभवात् = उत्पत्तिस्वीकारात् । प्रत्यक्षात्मकश्रुतेः, अनुमानात्मकमन्वादिस्मृतेश्च प्रामाण्यात् ।

अयमत्र हेतुः—कल्पान्ते शब्दब्रह्मराशिर्वेदः सकलार्थवासनोपेतः परमात्मस्वरूप-भूतस्तिष्ठति । कल्पादौ च हिरण्यगर्भः सुप्तप्रबुद्धन्यायेन मन्त्रान् स्मृत्वा प्रोद्बुद्धसंस्कारराशे-र्वेदात्तत्तदर्थसृष्टिमातनोति । ते ते देवाश्च मन्त्रार्थध्यानमात्रेण तत एव शब्दराशेः प्रादुर्भ-वन्ति लीलाविग्रहधारिणः । समाम्नातश्चायं प्रकारः "धाता यथापूर्वमकल्पयत्" इति श्रुत्या । अत एव वेदानामपौरुषेयत्वं प्रसिध्यति, प्रतिध्वनति च शब्दब्रह्मवादडिण्डिमनिर्घोषः ।

ननु "अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेदः" इति श्रुतेस्तत्तद्देवेभ्यो वेदो-त्पत्तेः श्रूयमाणत्वात् कथं वेदशब्देभ्यः सृष्टिरुपपद्यत इति चेन्न, कल्पादौ प्रादुर्भूतेभ्यो मन्त्र-विग्रहेभ्योऽग्निवायुरविभ्यो लोके यज्ञक्रियासिध्यर्थं "धेनुस्तनस्थदुग्धदोहनन्यायेन" वेदानां पूर्वसिद्धानां पृथग्भावेनाभिव्यञ्जन एव श्रुतितात्पर्यसत्त्वात्, न त्वपूर्वोत्पत्तौ । निरुक्तमपि मनुना—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिध्यर्थमृग्यजुःसामलक्षणम् ॥

( मनुस्मृ०, अ० १, श्लो० २३ )

अतो निर्विकल्पमिदं यद् वेदशब्देभ्य एव जगतः सृष्टिः । तेन च शब्दस्य ब्रह्मत्वं सिद्धम् ।

ननु 'यद्वाचाऽनभ्युदितम्, यतो वाचो निवर्तन्ते' इत्याद्याम्नायाद् यस्य किल ब्रह्मणो वाक्छायास्पर्शलेशोऽपि न, दूरे तस्य वाग्रूपतापरामर्शप्रत्याशा इति चेन्न, तस्य लक्ष्यत्वेन शक्यविषयत्वस्यैव प्रतिपादनात्। अपि च तस्य ब्रह्मणः शब्दात्मकत्वादेव शब्दकरणकनिर्वचनाविषयत्वं प्रतिपाद्यते श्रुत्या। भिन्ने हि कार्यकारणत्वोपपत्तिर्वाच्यवाचकत्वोपपत्तिर्वा, नह्यभिन्ने। अतो ब्रह्मणः शब्दात्मकत्वप्रतिपादने श्रुतितात्पर्यमवगमेलिमम्।

अस्त्वाकाशगुणः शब्द इत्यपि न बोद्धव्यम्, गुणगुणिभावस्य कल्पितत्वेनाभासमात्रत्वात्, गुणगुणिनोस्तादात्म्याङ्गीकारेण शब्दव्यतिरेकेणाऽऽकाशानिरुक्तेश्च। शब्दतन्तुजाल एव सकलमूर्तलोकस्यावकाशकरत्वात् 'आकाश' इत्याख्यायते। शब्दप्रचय एवाकाशः। उक्तं च भर्तृहरिणा—

'अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः।'

शब्दस्पर्शरूपरसगन्धतन्मात्राभ्य उत्तरोत्तरवृद्धिक्रमेणाकाशादिभूतसृष्टिमभिदधतः साङ्ख्याचार्यस्यापि कथञ्चित् प्रक्रियाभेदेन शब्दपूर्वकभूतसृष्टिप्रतिपादनं लभ्यते। "यः सर्वज्ञः स सर्ववित्" इत्याद्यागमप्रमाणपुरस्कारेण सर्वज्ञं नित्यमीश्वरं परमात्मानं संसाधयन्तो नैयायिका ईश्वरसङ्केतस्येश्वरेच्छाया वा शब्दशक्तित्वमभ्युपगच्छन्तः प्रच्छन्नतयाऽनादिशब्दशक्तिमुररीकृत्य शब्दस्य कीदृशं तत्त्वमभ्युपगच्छन्तीति तदिङ्गितेनैव चिन्तनीयम्। "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति लक्षयता "तस्य वाचकः प्रणवः" इति चाभिदधता नादं च परतत्त्वतया सन्दिशता योगसूत्रेण शब्दस्य परपदासीनता पुरस्कृतैव।

एकस्यैवेन्द्रस्यानेकक्रतुषु हविर्भागित्वेन क्रत्वङ्गत्वं स्वीकुर्वद्भिर्मन्त्रविग्रहदेवतावादिभिरध्वरमीमांसकैः—

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।<br>
वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा॥

इत्यादिना वेदानामपौरुषेयत्वं सम्प्रवदमानैरङ्गीकृतमेव देवतारहस्येन जगतः शब्दमयत्वम्।

अद्य तु ध्वनिविस्तारकादियन्त्रमहिम्ना अमरिकायां गायतो गायकस्य संगीततानं परितः प्रसृमरमभितो विदिग्भागेषु शृण्वन् कस्को न जनो विश्वसिति शब्दब्रह्मणः कणकणव्यापकतायाम्, अणुबमादिविस्फोटस्य घोरहुङ्कारपूर्विकां विनाशलीलां करालां प्रेक्ष्य कस्य न हृदयं प्रत्येति शब्दस्य जगदाकारतया प्रचीयमानत्वे। जगति शब्दसन्दोहेन विचारादानप्रदानं तदनुगतार्थानुधावनं च प्रत्यहं प्रतिक्षणं समीक्ष्यमाणं ध्रुवमुत्पादयत्येव श्रद्धां शब्दब्रह्मणः सृष्टिस्थितिलयकारित्वे जगदाकारतया विवर्तमानत्वे च।

एतावता सपरिकरेण व्याख्यानेन प्रपञ्चितं व्यक्ताव्यक्तस्थूलसूक्ष्मवाचकावाचकशब्दसामान्यस्य निरूपणम्।

अथ शाब्दिकानां किं शब्दस्वरूपमभिप्रेतमित्यपेक्षायां प्राह वाक्यपदीयब्रह्मकाण्डे योगिराजो भर्तृहरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

नित्यं निरञ्जनं व्यापकं जगदुद्भवस्थितिनिरोधादिनियामकं ग्राह्यग्राहकोभयस्वरूपं यथार्थतोऽर्थाप्रविभक्तमेकमेवाद्वितीयं शब्दतत्त्वं ब्रह्म घटपटादिनाम्ना कम्बुग्रीवाद्याकारेण च रज्जुसर्पवद् विवर्तते । यथा चाह श्रुतिः—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिस्पन्दमानाम् ।
विदुरन्यामिव च पूतां नानारूपात्मनि सन्निविष्टाम् ॥

तत्रादौ महाभाष्ये भगवान् पतञ्जलिर्व्यङ्ग्यव्यञ्जकसूक्ष्मस्थूलशब्दविभागेन द्विविधं तत्त्वं प्रकाशयन् वाचकशब्दस्वरूपमाह—

"येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः"
"अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः ।"

तत्र प्रथमांशेन लोकव्यवहारातीतस्य सूक्ष्मस्य नादाभिव्यङ्ग्यस्य स्फोटस्य शब्द-स्वरूपतामर्थवाचकतां च प्रतिपादयति । द्वितीयांशेन तु लोकव्यवहारविषयस्य स्थूलस्य श्रोत्रग्राह्यस्य वैखर्यात्मकस्य शास्त्रप्रक्रियानिर्वाहाय कल्पितवर्णपदादिविभागवतः शब्द-स्वरूपतां निरूपयति । तत्र भाष्यकाराभिमतस्तु प्रथम एव । अत एव "तपरस्तत्कालस्य" इति सूत्रे "एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः" इत्याह भाष्यकारः ।

भाष्यकारादपि पूर्वम् "अवङ्स्फोटायनस्य" इति सूत्रे भगवता पाणिनिना स्मृत आचार्यस्तत्र भवान् स्फोटायनः स्फोटवादं सर्वप्रथममुपन्यास्थदिति तस्यार्थानुगुणाभि-धानेनैव प्रतीयते ।

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥

इति ब्रह्मकाण्डकारिकया हरिरपि द्विविधं शब्दं समर्थयति ।

अयं स्फोटवादः पुराणतमः, नार्वाचीनः ।

श्रीमद्भागवते तत्रभवान् वेदव्यासोऽपि स्फोटवादं निर्दिशन् तस्य सर्वात्मत्वमङ्गी-करोति । तत्र हि—

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ।
नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥

इत्याह ।

वैयाकरणानामयं प्रधानतमः स्वतन्त्रो वादः । वैयाकरणमूर्धन्यैर्भट्टोजिदीक्षित-कौण्डभट्ट-नागेशभट्टादिभिस्तु सविशेषमुद्घोषित एव ।

अन्यैश्चालङ्कारिकैर्मम्मटानन्दवर्धनाचार्यादिभिरपि ध्वनिवादं पुरस्कृत्य प्रकार-भेदेन समादृतोऽयं स्फोटवादः ।

तत्र मान्येन मम्मटेन काव्यप्रकाशे प्रथमोल्लासे ध्वनिकाव्यविवेचने निगदितम्—

"बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति ।

एवं शब्दार्थव्यतिरिक्तध्वनेः काव्यात्मत्वं प्रतिपादयता प्राचीनाचार्येणानन्दवर्धनेनापि समनुगत एवायं स्फोटवादः। अतः प्रयत्यते तस्य विषये किञ्चित् स्वरूपदिग्दर्शनाय ।

अथ कोऽयं स्फोटः सर्वथाऽश्रुतपूर्वप्रस्थानः ? उच्यते—स्फुटत्यर्थो यस्मादिति व्युत्पत्तेः 'अर्थविशिष्टत्वं स्फोटत्वम्, वैशिष्ट्यं च स्वतादात्म्यस्वविषयकोपस्थितिप्रयोजकशक्त्याश्रयत्वसम्बन्धाभ्याम् ।

वर्णानामुच्चरितप्रध्वंसित्वेन समुदायासम्भवाच्छक्त्याश्रयत्वानुपपत्त्या मध्यमानादात्मकस्फोटः शक्त्याश्रयः कल्प्यते ।

**अयमत्र प्रपञ्चः**

अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षट् भावभेदस्य योनयः ॥

इति हर्य्युक्तदिशा कालशक्तिवशप्राप्तपरिपाकप्राणिकर्मवशाच्छब्दब्रह्मसिसृक्षारूपमायावृत्तिकलिलं बिन्दुरूपमव्यक्तं त्रिगुणं वर्णादिविशेषशून्यं ज्ञानप्रधानं चेतनमिश्रं नादमात्रं स्वपरादिशब्दैर्व्यवह्रियमाणं नाभिदेशस्थवाय्वभिव्यक्तं सत् 'पश्यन्ती' इत्युच्यमानम्, हृदयदेशस्थवाय्वभिव्यक्तम् 'मध्यमा' इति प्रोच्यमानम्, आस्यदेशस्थवाय्वभिव्यक्तं वर्णादिविशेषयुक्तं 'वैखरी' इति चोच्यते ।

तदुक्तम्—

परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥

एवमन्यत्राप्यभिहितम्

स्वरूपज्योतिरेवान्तःपरावागनपायिनी ।
यस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥
अविभागेन वर्णानां सर्वतः संहृतक्रमा ।
प्राणाश्रयात्तु पश्यन्ती मयूराण्डरसोपमा ॥
मध्यमा बुद्ध्युपादाना कृतवर्णपरिग्रहा ।
अन्तःसंकल्परूपा तु न श्रोत्रमुपसर्पति ॥
ताल्वोष्ठव्यापृतिव्यङ्ग्या परबोधप्रकाशिनी ।
मनुष्यमात्रसुलभा बाह्या वाग्वैखरी मता ॥

अयमर्थः—"आत्मा बुद्ध्या समेत्यार्थान्" इत्यादिपाणिनीयशिक्षोक्तदिशाऽभिप्रेतमर्थं विवक्षोः पुंसो वाचकशब्दप्रयोगायेच्छावशेन जातात् प्रयत्नान्मूलाधारे प्राण-

वायोः स्पन्दो जायते। तेन स्पन्देन मूलाधारे स्पन्दशून्या परा वाक् प्रादुर्भवति। सा च पश्यन्त्यादिसकलशब्दकारणभूता स्वप्रकाशासंवित्स्वरूपा भवति। सैव प्राणाग्नि-प्रेरिता मूलाधारादूर्ध्वनाभिदेशं प्राप्ता वर्णादिविभागरहिता मयूराण्डरसवत्, वर्ण-संस्कारवती सामान्यज्ञानस्वरूपा विवक्षितपदार्थदर्शनात् पश्यन्तीत्युच्यते। सैव च हृदय-देशं प्राप्ताऽभिव्यक्तवर्णपदवाक्यात्मिका मानससंकल्परूपाऽर्थविशेषाध्यवसाययुक्ता परश्रवणग्रहणायोग्या मध्यदेशावस्थानाद् 'मध्यमा' इत्युच्यते। सैव तत ऊर्ध्वं गता कण्ठताल्वादिस्थानेषु वर्णरूपेणाभिव्यक्ता परश्रवणगोचरा परावबोधप्रखरा मुखदेशाद् बहिर्निर्गता सर्वजनसुलभा 'वैखरी' इत्युच्यते।

तत्र परा वाग् योगिनामसम्प्रज्ञात( निर्विकल्पक )समाधिगम्या। पश्यन्ती च सम्प्रज्ञात ( सविकल्पक ) समाधिगम्या। मध्यमा तूपांशुजपे मानसबोधविषया। वैखरी परेभ्योऽर्थबोधने क्षमा।

अस्याश्चतुर्विधाया वाचो निरूपणमाधुनिकानां कपोलकल्पनामात्रमिति न शङ्क-नीयम्, श्रुतिप्रमाणसिद्धत्वात्।

तथाहि ऋक्संहितायां नवमे मण्डले परापश्यन्तीमध्यमाख्यत्रिविधवाचां कायाग्नि-प्रेरणोद्भूतत्वं प्रतिपाद्यते—

"तिस्रो वाच ईरयति प्रवह्निः" इत्यनेन। प्राणप्रधानत्वाद् वैखर्या अत्रानुपादानम्।

दशमे मण्डलेऽपि श्रूयते

चत्वारितेऽसुर्याणि नामादाभ्यानि महिप्रस्य सन्ति।
त्वमङ्गतानि विश्वानि वित्से येभिः कर्माणि मघवञ्चकर्थ॥

अनेन सूक्तेन चतुर्विधाया वाचो निरूपणं स्पष्टमेव लभ्यते। एवमेव "चत्वारि शृङ्गा त्रयोऽस्य पादाः" इत्यनेन "चत्वारि वाक् परिमिता पदानि" इत्यनेन च महा-भाष्योद्धृतेन, ऋक्सूक्तेन वाचश्चतुर्विधत्वमुपदिश्यते।

तथा सामसंहितायामुत्तरार्चिकेऽपि पठ्यते—
तिस्रो वाच उदीरते गावो मिमन्ति धेनवः। हरिरेति कनिक्रदत्।

( प्र० २ अर्ध प्र० २ )

अस्यार्थः—तिस्रोवाचः=ऋग्यजुःसामानि ऋत्विज उच्चारयन्ति, अथवा परा-पश्यन्तीमध्यमाख्यावाचोऽभिव्यज्यमाना भवन्ति।

धेनवो गावः=दोग्ध्र्यो गावः, अर्थप्रकाशिका वैखरीवाचो वा मिमन्ति=अर्थं प्रमिण्वन्ति। हरिः=सोमः शब्दो वा कनिक्रदत् एति=द्रोणकलशं गच्छति, कण्ठताल्वा-दिष्वभिव्यक्तिं वा प्राप्नोति।

अनेन सुव्यक्तमेव चतुर्विधवाचां निरूपणम्। अपिचाग्रे तत्रैवाग्निस्तुतौ—

पाहि नो अग्न एकया पाह्युत द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥
( सा० उत्तरार्चिक प्र०, ७, अर्ध प्र० २ )

इत्यनेनापि प्रतिपाद्यते ।

यजुष्यप्यग्निप्रार्थनामुखेन वाचश्चतुर्विधत्वमुपपाद्यते । तत्र निगदितम्—

'विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ' इति । ( अ० १२ )

अथर्ववेदे तु वाक्चतुष्टयस्वरूपं सरहस्यं प्रकाशितम् । तथाहि तत्र—

वीती वा ये अनयन् वाचो अग्रं मनसा वा ये वदन्नृतानि ।
तृतीयेन ब्रह्मणा वा वृधानास्तुरीयेणामन्वत नाम धेनोः ॥
( का० ७, अनु० १, सू० १ )

अस्यार्थः—ये विवक्षवः धीती = धीत्या ध्यानात्मकेन परावस्थापन्नेन प्रथमेन शब्द-ब्रह्मणा ( अग्रे 'तृतीयेन' इत्युच्यमानत्वादत्रापि प्राथम्यविशिष्टशब्दब्रह्मणो लाभः ) वाचो अग्रम् = पश्यन्त्यादिसकलवाचः कारणम्, अनयन् = ध्यानविषयत्वं प्रापितवन्तः । ये च विवक्षवो मनसा = मननात्मकेन पश्यन्त्याख्येन द्वितीयेन शब्दब्रह्मणा ऋतानि = सत्यानि ( अखण्डपरावस्थापेक्षया ईषदाविर्भूतानि देवतावाचकशब्दविचारविषयाणि वाक्यानि ) अवदन् = सामान्यज्ञानविषयतां प्रापितवन्तः । ते विवक्षवः तृतीयेन = परापश्यन्त्यपेक्षया त्रित्वसंख्यापूरकेण ब्रह्मणा = हृदयदेशस्थेन मध्यमाख्येन अन्तर्विभक्ता-खण्डवाक्यात्मकेन स्फोटात्मकशब्दब्रह्मणा वावृधाना = वर्धयन्तः शब्दा विषयमर्थं शब्दवाच्यत्वेन पोषयन्तः, तुरीयेण = चतुर्थेन वैखर्यात्मकेन विभक्तवर्णपदवाक्यात्मकेन शब्दब्रह्मणा धेनोः = अभिमतार्थदोहकस्य वाचकशब्दस्य नाम अमन्वत ।

अनेन प्रणवस्य विश्वतैजसप्राज्ञघनेत्येदवस्थाचदतुष्टयनिरूपणमपि बोध्यम् । एवम्—
'तिस्रो वाचो निहिता अन्तरस्मिन्, तासामेका विपपातानुघोषम् ।
( का० ७, अनु० ४, सू० १ )

"यानि त्रीणि बृहन्ति येषां चतुर्थं वियुनक्ति वाचम् ।"
( का० ८, अनु० ५, सू० १ )

इत्यादीन्यथर्वसूक्तान्यपि वाक्चतुष्टयप्रतिपादकानि बोध्यानि ।

एतावता परिकरेणेदं तु संसिद्धमेव यद् वाचः पराद्यवस्थाचतुष्टयप्रतिपादनं निगमा-गममूलकं पुराणतमं च, नाधुनिककपोलकल्पितम् ।

तत्रावस्थाचतुष्टयमध्ये मध्यमायां यो नादांशस्तस्यैव स्फोटत्वं शक्त्याश्रयत्वं चोररी-क्रियते । स च स्फोटो वर्णाभिव्यङ्ग्यो वर्णाद्यतिरिक्तोऽखण्डो वर्णपदादिविभागशून्यो व्यञ्जक-ध्वनिरूपरूपिततयावर्णपदादित्वेन प्रतिभासमान इत्याधुनिकानां नागेशानुयायिनां समयः ।

यत्तु कश्चिदनित्यवर्णवादी व्यवतिष्ठते—अनित्या वर्णा एवार्थवाचकाः पदपरिकल्पनाभाजश्चेति, तन्न, द्विविधं हि कारणस्य कार्यकारित्वम्, प्रत्येकं संहत्य वा। नागदन्तानां शिक्यावलम्बनवत्, तृणानां रज्जुभाववच्च।

तत्राद्ये पक्षे वर्णानां प्रत्येकं वाचकत्वे प्रतिवर्णादर्थबोधापत्तिः स्यात्। द्वितीयपक्षे तु वर्णानामुच्चरितप्रध्वंसित्वेन युगपत् स्थित्यसम्भवेन समुदायासम्भवात् शक्त्याश्रयत्वानुपपत्तिः।

ननु वर्णानामनित्यत्वेऽप्यव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवत्त्वस्योत्तरोत्तरवर्णेषु संक्रमान्न पदप्रत्यक्षानुपपत्तिः, न वा शक्त्याश्रयत्वानुपपत्तिरिति चेन्न, नष्टविद्यमानयोरव्यवहितोत्तरत्वस्यासम्भवात्।

वीचितरङ्गन्यायेन शब्दाच्छब्दान्तरोत्पत्तेः चरमवर्णप्रत्यक्षपयन्तं तदुत्पत्तिधाराकल्पनेन पदप्रत्यक्षोपपादनेऽपि वस्तुतः पदस्याविद्यमानत्वेन शक्त्याश्रयत्वस्यैवानुपपत्तेः। अविद्यमानेऽप्याश्रयत्वाङ्गीकारे 'नष्टो घटो जलवान्' इति व्यवहारस्याप्यापत्तिः स्यात्।

पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णानुभवतः शाब्दबोधाङ्गीकारेप्यनुभवक्रमेण संस्कारोद्बोधक्रमनियमाभावात् 'सरो रसः' 'नदी दीन' इति विपरीतसंस्कारोदयेऽन्यादृशार्थबोधापत्तिः स्यात्। अतः स्फोटस्यैव नित्यस्य शक्त्याश्रयत्वे वाचकत्वमङ्गीकरणीयम्।

नन्वेवं स्फोटवादिनामपि एकैकाक्षरविज्ञानेनाभिव्यक्तिस्वीकारे पूर्वपूर्ववर्णैनैवाभिव्यक्तिसम्भवे—उत्तरोत्तरवर्णोच्चारणवैयर्थ्यापत्तिः स्यात्, प्रत्येकमभिव्यक्त्यस्वीकारे तु मिलितानामप्यनभिव्यञ्जकत्वापत्तिः स्यात्, इति चेन्न।

प्रत्येकं वर्णानां व्यञ्जकत्वेऽपि पूर्वध्वनिभिरनुत्पन्नस्फुटतरसंस्कारान्तःकरणैरन्तिमध्वनिसञ्जनिष्यमाणस्फुटतरज्ञानोपयोगिसंस्कारसहकारिज्ञानं जन्यते, ततः पश्चाद्भवध्वनिना पूर्वपूर्वध्वनिभावनासहकृतेन स्फुटतरं स्फोटतत्त्वं प्रकाशते। यथाहि—रत्नतत्त्वपरीक्षकाणां प्राक्तनज्ञानेन स्फुटतरमणिपरिचयाभावेऽपि पुनः पुनर्दर्शनेन पूर्वपूर्वसंस्कारसहकृतचरमप्रत्ययजन्यदृढतरसंस्कारबलेन जायते रत्नतत्त्वपरिचयः। तदुक्तं हरिणा—

नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥ इति।

अथ वर्णनित्यत्ववादिनो मीमांसका ब्राह्मवैखरीरूपाखण्डस्फोटवादिनश्च प्रत्यवतिष्ठन्ते—आस्तां तावदनित्यवर्णवादे वर्णानामवाचकत्वम्। नित्यास्तु वर्णाः। तदवयवकपदादीनां चैकत्वं विभुत्वं च। कालभेदेऽपि 'सोऽयं गकारः' 'तदेवेदं पदम्' इति प्रत्यभिज्ञानाद् वर्णानां तद्घटितानुपूर्व्याश्चैकत्वम्। उक्तं च—

'प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्वं प्रतिष्ठितम्।' इति।

एवं दिनान्तरानुभूतेऽधुनानुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञया आशुविनाशित्वनिरासेन स्थिरत्वे सिद्धे नित्यत्वमपि। सर्वदेशेषूपलम्भाद् विभुत्वमपि। शब्दबुद्धिकर्मणां क्षणिकत्वमिति तु न युक्तम् 'इदानीं जानामि' 'इदानीमुच्चारिताः' इति व्यवहारात्।

ननु वर्णानां नित्यत्वे 'गकारः उत्पन्नः' इति व्यवहारः कथमिति चेन्न, श्यामगुणमात्रनाशे रक्तगुणमात्रोत्पत्तावपि 'श्यामो नष्टो रक्त उत्पन्नः' इति गुणगतोत्पत्तिविनाशयोर्घटे आरोपेण तादृशप्रतीतिवद् वर्णाभिव्यञ्जकध्वनिगतोत्पत्तिविनाशयोरारोपेण 'गकार उत्पन्नः' इत्यादिप्रतीतेरुपपत्तेः ।

किञ्च प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्न वर्णेष्वनुभवः, 'वर्णमुच्चारयामि' इत्येव प्रत्ययात् । प्रकृतिविकृतिभावस्तु बुद्धिविपरिणामेन ।

शब्दानां नित्यत्वादेव 'एकमिदं घटपदम्' इति प्रत्ययोपपत्तिः ।

शब्दनित्यत्वे सुदृढा भाष्योक्तिः—"तद्यथा घटेन कार्यं करिष्यन्" इत्यादि । शब्दस्य विभुत्वमपि "एक इन्द्रशब्दोऽनेकेषु क्रतुष्वाविर्भवति" इत्यादिना सरूपसूत्रभाष्ये स्पष्टम् ।

तच्चेदं पदं प्रकृतिप्रत्ययभागवदित्येके ।

अन्ये तु पदं वाक्यं चाखण्डमेव । अवयवावयवधाराकल्पनायां वर्णानामप्यवयवकल्पनापत्तौ परमाणुतुल्यानामवशेषापत्तिः स्यात् । सावयवत्वे नित्यताभङ्गापत्तिश्च स्यात् ।

एवं च वर्णानां नित्यत्वे सिद्धे अवहितोत्तरत्वसम्बन्धेनोत्तरोत्तरवर्णानां पूर्वपूर्ववर्णवत्त्वे सुलभे पदप्रत्यक्षसिद्धया शक्त्याश्रयत्वसिद्धौ न वर्णव्यतिरिक्तः स्फोटः । कत्वादिना प्रतीयमानः स्फोट एव ककार इति वर्णनित्यत्ववादिनां वर्णस्फोटवादिनां च व्याख्यानम्, परमेतन्न शोभनम्—"यावद् गकारे यतितं तेनैव तावदौकारे, येनैव यत्नेनैकोवर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यमुत्पाद्य द्वितीयः प्रवर्तते" इति "परः सन्निकर्षः संहिता" इति सूत्रस्थभाष्यानुरोधेन प्रथमवर्णनाशानन्तरमेव द्वितीयादिवर्णोत्पत्तिस्वीकारात् "स्वध्वंसानधिकरणक्षणसम्बन्धित्वरूपाव्यवहितत्वस्य स्वाधिकरणक्षणोत्पत्तिकत्वरूपोत्तरत्वस्य" चासम्भवेन पदप्रत्यक्षानुपपत्तिदोषतादवस्थ्यात् ।

अतिरिक्तस्फोटवादे, तु व्यञ्जकरूपरूषितेऽव्यवहितोत्तरत्वं सुघटम् । अतस्तस्य शक्त्याश्रयत्वमकण्टकम् ।

अपि च वर्णस्फोटवादिनाम् 'अकार एक एव, ककार एक एव, घटपदमेकमेवेत्येवं सजातीयभेदवारणेऽपि तेऽनेके वर्णा अकारककारादिकाः परस्परं भिन्ना विजातीयभेदवन्तः, इत्यर्धजरतीयत्वमनुचितम् ।

तस्मात् सजातीयविजातीयस्वगतभेदशून्यो वर्णव्यतिरिक्तो मध्यमावस्थस्फोटात्मक एक एवाखण्डः शब्दो न्याय्यः शक्त्याश्रयः ।

'गौः' इति प्रत्येकवर्णज्ञानविलक्षणज्ञानस्य निरालम्बनत्वासम्भवात् तदालम्बनं स्फोटः कल्प्यते ।

न च—एकैकवर्णविषयेभ्यो ज्ञानेभ्यः पश्चाद् विलक्षणसमुदायविषयकज्ञानस्य सत्त्वेन कथं निरालम्बनत्वोक्तिरिति वाच्यम्, उपदर्शितप्रत्ययस्य प्रत्येकसमुदायोभयविलक्षणत्वात् ।

यत्तु प्रतीतेरेकैकवर्णज्ञानविलक्षणत्वेऽपि वर्णरूपानुविद्धत्वाद् रूपान्तराभानाच्च वर्णव्यतिरिक्तत्वकल्पने सामर्थ्याभाव इति। तन्न—

नह्यन्यरूपानुविद्धस्य प्रत्ययस्य नान्यदालम्बनमिति नियमः। सत्यपि व्यक्तिविशेषानुविद्धत्वे जातिप्रत्ययस्यार्थान्तरत्वं मन्यत एव। चाक्षुषप्रत्यक्षं प्रत्यालोकस्य कारणतयाऽऽलोकानुविद्धमपि चाक्षुषं वस्तु नोज्झत्यालोकातिरिक्तस्वरूपताम्।

एवञ्च स्फुटं प्रकाशमानस्य स्फोटस्य वर्णानुविद्धत्वेन भानेऽपि वर्णातिरिक्तत्वमेव प्रसिध्यति। तस्माद् वर्णपदवाक्यानां जातिव्यक्तिभेदेन षड्विधत्वम्, अखण्डपदवाक्यविभेदेन चाष्टविधत्वं स्फोटस्येत्यादि सर्वं कल्पनामात्रमौपाधिकं वा, न तात्त्विकम्। कत्वादिकं चाभिव्यञ्जकवायुनिष्ठं तत्तत्स्थानाभिघातव्यङ्ग्यम्। कत्वादिवैजात्यविशिष्टैर्वायुभिः स्वरूपरूषितस्य स्फोटस्य भानम्। तथाच व्यञ्जकवैजात्यमादायैव ककारहकारयोर्भेदव्यवहार औपाधिकः, अद्वैतसिद्धान्ते विषयसम्बन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे भेदव्यवहारवत्। प्रकृतिप्रत्ययपदवाक्यविभागः सर्वो रेखागवयन्यायेन कल्पित एव। यथा रेखाकल्पितेन गवयेन वास्तविकगवयस्य ज्ञानम्, तथा कल्पितेन प्रकृतिप्रत्ययादिनाऽखण्डस्फोटविज्ञानम्। अत एव स्फोट एव कत्वादिना व्यज्यत इति "ए ओङ्" इति सूत्रभाष्ये ध्वनितम्। तत्र हि वर्णैकदेशानां वर्णग्रहणेनाग्रहणमिति पक्षे 'क्लृप्तः' इत्यत्र लत्वाप्राप्तिमाशङ्क्य "अथवोभयतः स्फोटमात्रं निर्दिश्यते 'र'-श्रुतेर्लश्रुतिर्भवति" इत्युक्तम्। तत्तात्पर्यं त्विदमेव यद् वस्तुतो रत्वादिमान् न कश्चित्, किन्त्वन्यगततत्तद्रूपेण स्फोटस्यावभासमात्रम्। अतो रेफावभासिस्फोटप्रसङ्गे लकारावभासिस्फोट इत्यादिक्रमेणार्थः। एवञ्च स्फोटपदस्य ताल्वाद्यभिघातात् तत्तद्वर्णपदादिरूपेणाभिव्यङ्ग्यो मध्यमानादोऽर्थः। शक्त्याश्रयत्वेन स एव सकलार्थवाचकः सकलार्थभासकश्च इत्याधुनिकसम्प्रदायसारः। अयं पक्षो वाच्यवाचकत्वदृष्ट्या व्यवस्थितः।

वस्तुतस्तु शब्दब्रह्मवादस्तु पराख्यवाचि प्रतिष्ठितः। तदनुगते तदन्विते चान्तरे बाह्ये सर्वस्मिन् जगति पञ्चकोशविवेकन्यायेन स्थूलसूक्ष्मक्रमेण ब्रह्मबुद्धिरुपासकबुद्ध्यैव। अतो वर्णनित्यत्ववादिनां बाह्यवैखर्यात्मकस्फोटवादिनां वर्णातिरिक्तान्तरस्फोटवादिनां च सर्वेषां मतावगाहनेन निर्गलितमिदं भवति यद् द्विविधं तत्त्वं शब्दस्य—स्थूलं सूक्ष्मं च। तत्र मध्यमानादः साक्षादर्थवाचकः, वैखरी तु स्फोटाभिव्यञ्जनद्वारा।

अतः शब्दब्रह्मोपासकानां प्रथमा ब्रह्मबुद्धिर्बाह्ये शब्दमात्रे, ततो ब्रह्मबुद्धिर्लोकदृष्ट्या वाचकत्वेन कल्पिते वैखर्यात्मके शब्दे, तत आन्तरे मध्यमानादे, ततः पश्यन्त्याम्, ततश्च परायाम्। अनेन पञ्चकोशविवेकन्यायेन विविक्ते शब्दब्रह्मणि समाहितः साधकः शब्दब्रह्मसाक्षात्कारवान् शब्दब्रह्मस्वरूपाज्ञानजन्यसंसारभ्रमं समूलमुच्छिद्य परं पुरुषार्थं मोक्षमधिगच्छतीत्यलं दुःसाहसेन।



# दानार्थकः √दा ( डुदाञ् ) : अर्थविज्ञानम्

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
सञ्चालकः
अनुसन्धानसंस्थानस्य, वा० सं० वि० वि०

√दा ( डुदाञ् ) ३।९ दाने ( उ )। तुलनीयौ भौवादिकौ ददधातुः, धारणपोषणार्थकश्च √धा ( डुधाञ् ) धातुः। दानार्थको दाण्धातुरेतस्यैव रूपमार्धधातुके।

१. ऋग्वेदे ( ६,२४,२ ) 'वाजी स्तुतो विदथे दाति वाजम्', 'अस्मभ्यं दद्धि पुरुहूत रायः' ( ऋ० ४,२०,७ ) इत्यादौ च दानार्थको दाधातुः। ऋग्वेदे सर्वत्रायमस्मिन्नेवार्थे लभ्यतेऽपरिवर्तनार्थः।

२. अस्य धातोर्द्वित्वेन सम्पन्नस्य ददधातोर्धारणरूपोऽर्थो लभ्यत ऋग्वेदे ( १,४१,९ ) 'चतुरश्चिद् ददमानाद् बिभीयादा निधातोः' इत्यत्र 'चतुरः = चतुःसंख्यकान् कपर्दकान् ददमानाद् = ददतो हस्ते धारयतः पुरुषात्' इति। ऋ० ( ३, ५३,१७ )—

स्थिरौ गावौ भवतां वीळुरक्षो मेषा वि वर्हि मा युगं वि शारि।
इन्द्रः पातल्ये ददतां शरीतोररिष्टनेमे अभि नः सचस्व॥

इत्यनयर्चया राज्ञः सुदासो यज्ञेऽवभृथं कृत्वा यज्ञशालातो निर्गन्तुमिच्छन् रथेऽश्वादिकं युञ्जानो विश्वामित्रो रथाङ्गानि स्तौति—अक्षः च वीळुः = दृढो भवतु, ईषा = दण्डश्च मा वि वर्हि = विनष्टो मा भवतु। युगं च मा वि शारि = विशीर्णं मा भवतु। इन्द्रः पातल्ये = पतनशीले कीलके शरीतोः = विशरणात् प्राक् 'ददताम् = धारयतु' इति धारणमर्थः, कीलके ( हस्तस्य ) दानं नाम स्थापनं ततश्च धारणम्। एवमेव ( ऋ० ७,३४,११ ) 'द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त' इत्यत्रापि 'उर्वशीसकाशाज्जातं त्वां विश्वेदेवाः पुष्करेऽधारयन्तेत्यर्थः। ( ऋ० ४,२६,६ ) 'ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदम' इत्यत्र 'श्येनः पक्षी सोमं ददमानः = धारयन्' इत्यर्थः। वस्तुत इह आङ्पूर्वकस्य धातोरर्थ इवार्थ इत्यादानं नाम धारणम्।

३. प्रपूर्वकस्य दाधातोरर्थः प्रदानम् इति। स मनु० ( ८, ४७ ) 'दापयेद् धनिकस्यार्थम्' इत्यत्र दृश्यते, धनस्वामिना राज्ञो बोधितत्वात् प्रकर्षोऽर्थस्तत्र ज्ञेयः।

४. प्रतिपूर्वकस्य दाधातोः प्रत्यर्पणमर्थः। स च तस्य निरुपसर्गस्यापि दृश्यते हरिवंशपुराणे ( १, २५, ३७ ) 'ददावङ्गिरसे तारां स्वयमेव पितामहः'—'ददौ = प्रत्यर्पयत्' इति नीलकण्ठः। आदानस्य परावर्तनं नाम प्रतिदानम्। मनु० ( ८, २२२ )—

क्रीत्वा विक्रीय वा किञ्चिद् यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहात् तद् द्रव्यं दद्याच्चैवाददीत च॥

इत्यत्रापि दाधातोः प्रत्यर्पणमर्थः, गृहीतद्रव्यस्यान्तर्दशाहात् पुनर्दानात् प्रतिदान-रूपार्थात्। याज्ञ० ( २, २६९ ) 'दापयित्वा हृतं द्रव्यं चौरं दण्डेन दण्डयेत्' इत्यत्रापि प्रत्यर्पणमर्थः।

इदानीं तावदुपपदसमभिव्याहारप्रभावेण परिवर्तितानामर्थानामिहोपन्यासः क्रियते—

५. 'इह भूम्यां मलं दत्त्वा' इति वा० रा० ( १, २४, २० ) भूमौ मलस्य दानं नाम त्यागः, सामर्थ्यात्। इह भूमिपदसमभिव्याहारात् तादृशोऽर्थो बुद्ध्यते। मनु० ( ८, २७५ ) 'आक्षारयञ्छतं दाप्यः पन्थानं चाददद् गुरोः, इत्यत्र 'अददद्= अत्यजत्' इति कुल्लूकभट्टः।

६. 'असूयकाय मा मां दास्तथा स्यां वीर्यवत्तमा' इति मनु० ( २, ११५ ) असूयकं प्रति विद्याया दानं नामाध्यापनं वदनं वार्थः, विद्यापदसन्निधानात्। 'दाः= वदेः' इति ( कुल्लूकभट्टः ) पुस्तकोत्थापनपूर्वकं तस्या दानं नैव सम्भवति। दाता प्रव-चनद्वारा ददाति विद्याम्, ग्रहीता च श्रवणद्वारा समाददातीति विद्याकर्मकदाधातोरर्थः कथनं प्रवचनमध्यापनं वेति। 'ब्रह्मसूत्रपदां वाणीं दापयन्तं मुनीश्वरम्' ( हरिवं० ३, ११८, १९ ) इत्यत्र शिष्येभ्यः पाठयितुमनुज्ञां प्रयच्छन्तम्' इति नीलकण्ठः।

७. 'न चादत्त्वा कनिष्ठेभ्यः' इति मनुः ( ९, २१४ ) दानेन सहानुजानां सम्बन्धोऽनाधिकारिकत्वेन पुण्यदृष्ट्या वा क्रियमाणस्य दानस्य प्रत्याख्यानं करोति। अनुजानां तु तस्मिन् धने वैधानिकोऽधिकारः स चानुक्रमतः कल्पितः। ज्यैष्ठ्यक्रमेण प्राप्तत्वादनुक्रमतः कल्पनं नामेति तद् दानं विशुद्धं दानमसदनुकल्पनात्मकं जातम्। एवं दृशा दाधातुरनुकल्पनार्थकः।

८. 'त्रिषु देशेषु ददतुः शिविरस्य हुताशनम्' इति महाभारते ( १०, ८, ११० ) शिविरस्य त्रिषु देशेष्वग्निदानं नामाग्नियोजनम्। अग्नियोजनं नाम दाहः। 'भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि' इति मनु० ( ५, १६८ ) दाहस्तु तात्पर्यार्थः। 'तं लेपं कुड्येषु दापय' इति महाभारते ( १, ५७, २४ ) इत्यत्रापि योजनमर्थोऽ-भ्युपगन्तव्यः।

९. 'गवां शतसहस्रेण दीयतां शबला मम' इति वा० रा० ( १, ५३, ९ ) विश्वामित्रोक्तिः। गवां शतसहस्रमूल्येन शबला-दानं नाम विनिमयरूपो विक्रयः। इह शतसहस्रगोरूपमूल्यसंनिधानेन तादृशोऽर्थो जायते।

१०. महाभारते ( १,१७१,११ )—

संप्राप्तयौवनां पश्यन् देयां दुहितरं तु माम्।
नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन्॥

इत्यत्र संप्राप्तयौवनाया दुहितुर्दर्शनपूर्वकं दानं नाम विवाहः, तादृशाया दानेन भार-तीयपरम्परायां तादृशार्थादिति दाधातोरुपयमनमर्थः।

११. मनु० ( ८,२३४ )—

कर्णौ चर्म च बालाश्च वस्तिं स्नायुं च रोचनाम् ।
पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत् ॥

इत्यत्र मृतपशूनां कर्णचर्मबालवस्तिस्नायुरोचना-दानं तत्स्वामिनां कृते न युज्यते। स मृतपशुचर्मोत्पाटकः स्वयमगृहीत्वा स्वामिनां कृते मोचयेदिति तदर्थः। एवं खल्विह मोचनरूपोऽर्थो दाधातोः। यद्यपि त्यागरूपेणार्थेनास्य विवरणं युक्तम्, तथापि सूक्ष्मभेद-प्रदर्शनार्थमिहोपन्यासः।

१२. हरिवंशपुराणे ( ३,११५,३७ )—

करदः कृष्ण इत्येव ब्रुवन्तः सर्वसात्त्वताः।
हासं मुमुचुरत्यर्थं तलं दत्त्वा परस्परम् ॥

इत्यत्र तलस्य दानं नामाऽऽस्फोटनम्, सामर्थ्यात्। एवमेव 'ततः प्रहसिताः सर्वे तेऽन्योऽन्यस्य तलान् ददुः' इति महाभार० ( ३,२३७,२४ ), आस्फोटनमर्थो दाधातोः। 'नृत्याव सहितावावां दत्ततालाननेकशः' इति महाभार० १,१५२,१३) सङ्गीतकसमयमात्रा-नुसारेणाऽऽस्फोटनमर्थो ज्ञेयः।

१३. 'दद्यात् पिण्डं धनं हरेत्' इति मनु० ( ६,१३६ ) पिण्डस्य दानं नामो-पहरणम्।

१४. 'तस्य दत्त्वार्गलं ताभिः स्नानव्याजात् प्रवेश्य सः' इति कथास० ( ४,६० ) अर्गलदानं नाम स्कम्भनम्, सामर्थ्यात्। अत एव विष्कम्भोऽपि शब्दस्तद्वाचको दृश्यते।

१५. महाभारते ( १,३४,९ )—

किञ्चित् कारणमुद्दिश्य सोमोऽयं नीयते मया।
न दास्यामि समादातुं सोमं कस्मैचिदप्यहम् ॥

इति गरुडोक्तिः। इह 'अहं कस्मैचिदपि सोमं समादातुं न दास्यामि' इति वाक्ये 'दास्यामि' इत्यस्यार्थः 'अनुज्ञास्यामि' 'अनुमोदिष्ये' 'अनुमंस्ये' इति। एषोऽर्थोऽनुपूर्वकस्य दाधातोर्भवति—ऋ० ( १,१६०,५ ) 'न दूढ्ये अनु ददासि वामम्' इत्यत्र वामम् = धनम्, अनुकूलं न वितरसि' इति सायणः। एवमेवान्यान्यप्युदाहरणान्यृग्वेदे ( १,६१,१५;२,२०,८; ६,२५,८;६,२०,११ ) द्रष्टव्यानि। एवं खलु सोपसर्गस्य दाधातोरर्थो निरुपसर्गेणापि तेन प्रकटीक्रियते।

१६. 'सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकम्' इति वा० रा० ( २,५३,११ ) दाधातुरुत्पादनार्थः, शोकस्याविर्भाव्यमानत्वात्।

१७. पञ्चतन्त्रे ( २,१४८ )—

यः स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥

इत्यत्र दाधातुः संचयार्थकः, '—भाग्यविहीनस्य तस्य संचिता लक्ष्मीरपि नश्यति' इत्यर्थसामर्थ्यात्। वस्तुत इह आङ्पूर्वकस्य दाधातोरादानं प्रापणं वेत्यर्थं निरुपसर्गो धातुराविष्करोति। एवं 'प्राप्ता लक्ष्मीरपि नश्यति' इत्यर्थस्यौचित्यम्।

१८. 'अधिकरणकमस्तके हस्तं दत्त्वा' इति मृच्छकटिके दाधातुः स्थापनार्थकः, सामर्थ्यात्। एवमेव मनु० ( ३,२२३ ) 'तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम्', इत्यत्र, 'तच्छीघ्रमर्धचन्द्रोऽस्य गलेऽस्मिन् दीयताम्' इत्यत्र, 'मूर्ध्नि मूर्धाभिषिक्तस्य ददति स्म विधानतः' इत्यत्र च दाधातुः स्थापनार्थकः।

१९. 'ददौ दानान्यनेकशः' इत्यत्र महाभारते ( १४,६१,३७ ) दाधातोः करणरूपोऽर्थः, दानपदेनैव दाधातोरुक्तत्वात्।

२०. 'प्रेमदत्तवदनानिलः पिबन्' इति रघु० (१६,३५) प्रेम्णा प्रवर्तितं मुखवायुं पिबन्निति दाधातोः प्रवर्तनरूपोऽर्थः सामर्थ्यात्।

२१. एवमेवान्येऽप्यर्था विज्ञेयाः। इह केचन संक्षेपेण निर्दिश्यन्ते— १. 'क्षीरं जातमात्रस्य ददुः' इत्यत्र सामर्थ्यात् पाययामासुरित्यर्थो दाधातोः। २. 'कथमस्य स्तनं दास्ये मातृभावेन जानती' इति हरिवं० ( २,१०४,१२ ) स्तनपदसमभिव्याहारेण सामर्थ्याच्चूषणमर्थः। ३. 'सेचनघटैर्बालपादपेभ्यः पयो दातुम्' इत्यत्र पादपपदसंनिधानेन सामर्थ्यात् सेचनमर्थो दाधातोः। ४. 'देवदत्तः' इत्यस्य 'देवेन रक्षितः' इत्यर्थः ( द्र० त्रिकाण्ड० ३,३,१६० ), दत्तम् = अर्चितम् इति मेदिनी, ते २३।

एवं तावदिह संक्षेपतो चतुर्विंशतिरर्था विचारिताः—

१. दानम्, २. धारणम्, ३. प्रदानम्, ४. प्रतिदानम्, ५. त्यागः, ६. वदनम् (अध्यापनम्), ७. अनुकल्पनम्, ८. संयोजनम्, ६. विक्रमः, १०. विवाहः, ११. मोचनम्, १२. आस्फोटनम्, १३. उपहरणम्, १४. स्कम्भनम्, १५. अनुज्ञा, १६. उत्पादनम्, १७. प्राप्तिः ( संचयः ), १८. स्थापनम्, १९. करणम्, २०. प्रवर्तनम्, २१. पानम्, २२. चूषणम्, २३. सेचनम् २४. अर्चनं चेति।

भारोपीयभाषाया मूलध्वनिः—दो–ः दॅ इति दानार्थकः। तत्रास्यार्थे न जातमथपरिवर्तनमित्याश्चर्यम् ( द्र० जूलि० २२३ पृ० )।

———

# पुराणेतिहासयोः सांख्य-योगदर्शनविमर्शः

डॉ० श्रीकृष्णमणित्रिपाठी

**विभागाध्यक्षः, पुराणेतिहासविभागस्य, वा० सं० वि० वि०**

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन प्रयोजनमन्तरा न भवति कस्यचिदपि कुत्रापि प्रवृत्तिः साधीयसी। अनादिकालतः प्रसूतप्रवाहे दुरवगाहे परःसहस्रबाधेऽगाधेऽस्मिन् जगज्जलनिधौ निमज्जतां कञ्चिदनपायमुपायमपश्यतां जनानामुद्धरणाय दर्शनादृते नान्योस्ति सुदृढस्तीरः, नापि कश्चिदन्यो धीवरो धीवरः प्रभवेदन्तरेण विश्वनियन्तारं सर्वान्तर्यामिणं निखिलगुणगणावासं जगन्निवासं वारिदभासं भगवन्तं वासुदेवम्। अतो दर्शनस्य भगवतश्च वास्तविकं महिमानं नेशः शेषोऽप्यशेषतया वक्तुं बद्धपरिकरः स्यात्।

अथापि "अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्" इति महिम्नःस्तोत्रानुसारं यत् किञ्चिदुच्यते तदखिलब्रह्माण्डद्वीपदीप्ताय भगवते भास्कराय दीपप्रदर्शनमिव भक्तिप्रदर्शनमात्रमेवास्ति।

## पुराणानां वेदमूलकत्वम्

प्राणिमात्रस्य सततं भवति सुखेच्छा स्वाभाविकी। परं केवलं लौकिकैरुपायैर्न सम्भवति सा। अतस्तदुपलब्धयेऽपौरुषेयवेदबोधितेतिकर्तव्याश्रयणमेव श्रेयस्करं मन्यन्ते वेदविदो विद्वांसो भट्टपादाः—

प्रत्यक्षेणानुमानेन यस्तूपायो न विद्यते।
एवं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥

एवञ्च भारतीयतत्त्वज्ञानस्योद्गमविकासयोरनुसन्धानाय वेदानां परिशीलनं नितान्तमावश्यकं वैदिकरहस्यानां च यथार्थज्ञानाय पुराणानां पर्यालोचनमत्यन्तमुपकारि विद्यते। अतो व्यासवाल्मीकिप्रभृतयो महर्षयोऽलौकिकेन तपस्याबलेन ऋतम्भरया प्रज्ञया परमात्मनोऽनुकम्पया वेदानां यथार्थमर्थं ज्ञात्वा तत्प्रचारस्यावश्यकतामनुभूय सुरुचिपूर्णया गीर्वाणवाण्या रामायणं महाभारतं पुराणानि च व्यरचयन्। अत इतिहासपुराणद्वारा वेदार्थस्योपबृंहणं जायते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥ इति

(महाभारते आदिपर्वणि १।६७)

वेदे गूढतया वर्णितानामर्थानां यावत् प्राञ्जलया शैल्या वर्णनं न विधीयेत, तावत् पुराणानां निर्माणस्य महाभारतस्य विस्तारस्य च प्रयोजनमेव न पूर्णं भवितुमर्हति। अत एव आख्यानोपाख्यानगाथाकल्पशुद्ध्यादिभिस्तेषां विस्तारं कृतवान् भगवान् वेदव्यासः—

आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।
पुराणसंहितां चक्रे पुराणार्थविशारदः॥
(विष्णुपुराणे ३।६।१५)

तथाच वेदानां वास्तविकं रहस्यमवगन्तुं प्राचीनाख्यानोपाख्यानादिवर्णनव्याजेन विविधान् मनोज्ञान् मार्मिकांश्चोपदेशान् दातुमन्तःकरणं भगवदुन्मुखं च विधातुं पुराणेतिहासं निर्मितमिति निर्विवादम्—

विस्ताराय च वेदानां स्वयं नारायणः प्रभुः।
व्यासरूपेण कृतवान् पुराणानि महीतले॥
(ब्रह्मपुराणे २।३।४१)

## पुराणानां वैशिष्ट्यम्

पुराणानि हि सर्वविद्यानामाकरभूमिः। तत्र समेषां दर्शनानां सिद्धान्तस्य च सूत्ररूपेण निरूपणं कृतमस्ति। विशेषतः सांख्ययोगवेदान्तदर्शनानां वर्णनं बाहुल्येन उपलभ्यते। तत्तद्देवतानां स्तुतिषु दर्शनसरणिरेव समादृता विद्यते।

मानवजन्मनः प्रधानं लक्ष्यमस्ति भगवत्प्राप्तिः। तत्साधनानि च सन्ति सरलतया पुराणानि। निष्कामकर्मद्वारा त्यागवृत्तिपूर्वकं स्वर्गापवर्गयोर्मार्गस्य सुलभानि साधनानि पुराणान्येव सन्ति। पुराणानि सर्वसाधनयोगक्रियासिद्धितन्त्रमन्त्रसिद्धान्तैः परिपूर्णानि सन्ति, अत एव सर्वशास्त्रेषु पुराणानां गौरवं गीतमस्ति।

पुराणानि हि त्रितापतप्तानां प्राणिनां प्रबोधम्, अज्ञानान्धकारे निपतितानां प्रकाशम्, भ्रान्तानां सन्मार्गम्, निराशानामाशाज्योतिः, शोकसन्तप्तानामुल्लासमयं प्रसादम्, पथि भ्रष्टानां कर्तव्यज्ञानम्, पापिनां पापापनोदनप्रायश्चित्तम्, नीतिविशारदानां नीतिनैपुण्यम्, निष्कर्मिणां साधनोपदेशम्, भक्तानां भक्तिभावोपदेशम्, ज्ञानिनामुत्कृष्टज्ञानप्रकाशञ्च ददति। तात्पर्यमिदमस्ति यद् ये जिज्ञासवो येनोद्देशेन पुराणानुशीलनं कुर्वन्ति ते समुद्रादमूल्यं रत्नमिवोभयलोककल्याणकारिणं बहुमूल्यं सदुपदेशं प्राप्य स्वं जीवनं सफलयितुं नूनं समर्था भवन्ति।

## दर्शनसमीक्षा

मनुष्यजीवनं हि बाहुल्येन दुःखमयमेवास्ति। अतो भारतीयदर्शनेषु दुःखस्यास्तित्वमङ्गीकृत्य तदपाकरणायानेके उपायाः प्रतिपादिताः सन्ति। बौद्धदर्शने दुःखदूरीकरणायाष्टावुपाया उक्ताः। योगवासिष्ठं तु भगवतो रामस्य दुःखापनोदनायैव निर्मितम्। गीताया आरम्भोऽप्यर्जुनस्य विषादापनोदनायैव जातः। न्यायनये मिथ्याज्ञानमेवास्ति दुःखस्य मूलम्, तन्निवृत्तये एकमात्रमुपायः प्रमाणप्रमेयादिषोडशपदार्थानां तत्त्वज्ञानोप-

लब्धिरेव। वैशेषिकदर्शनसिद्धान्ते दुःखस्यात्यन्तिकनिवृत्तिरेव निःश्रेयः। सांख्यदर्शनमते त्रितापदुःखाभिभूतं प्राणिमात्रं तन्निवृत्तिः पञ्चविंशतितत्त्वज्ञानादेव भवति—

पञ्चविंशतितत्त्वज्ञः स्यत्र कुत्राश्रमे वसन्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

योगदर्शनमते प्रकृतिसंयोगाद् दुःखं तद्वियोगाच्च कैवल्यम्। अतस्तज्ज्ञानाय षड्विंशतितम ईश्वर आराध्यः। अद्वैतवेदान्तनये केवलं ब्रह्मैव सत्यम्, तदतिरिक्तं सर्वं दृश्यप्रपञ्चं मायिकं भ्रमो वा। ब्रह्मज्ञानोदयेन दुःखसम्पृक्तस्य दृश्यप्रपञ्चस्य निषेधादखण्डं चिन्मयमेकरूपमद्वितीयं ब्रह्मैवावशिष्यते।

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।

एवं सर्वदर्शनमते दुःखनिवृत्तये स्वस्वरूपज्ञानमेवात्यन्तमुपकारि। वेदान्तस्य ब्रह्म गीतायाः पुरुषोत्तमः श्रीमद्भागवतस्य श्रीकृष्णश्चैकमेव परमं तत्त्वमस्ति।

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥

(श्रीमद्भागते १।१।११)

एवं विभिन्नदर्शनेषु जगत्कर्तृत्वस्वरूपमपि भिन्नं भिन्नं स्वीकृतमस्ति, न्यायदर्शनं वैशेषिकदर्शनं च ईश्वरं जगत्कर्त्तारं स्वीकुरुतः। योगदर्शनं सेश्वरसांख्यदर्शनं हि पुरुषविशेषं संसारोत्पादकमङ्गीकुरुतः, निरीश्वरसांख्यमते प्रकृतिरेव कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेपः, वेदान्तदर्शनं तु ब्रह्मण एव विवर्तं जगदिति मनुते। मीमांसादर्शनं तु कर्मैव प्रधानमङ्गीकरोति।

## सांख्ययोगयोः पार्थक्यम्

प्रकृतिपुरुषयोः यथार्थस्वरूपज्ञानेनात्मख्यातिर्जायते। अनात्मख्यात्या भेदः तथा सम्यक्ख्यात्या अद्वैतं ज्ञानमुत्पद्यते। सम्यक्ख्यातिरेव सांख्यमुच्यते। प्रधानपुरुषयोर्विवेकख्यातिरेव सांख्यस्यास्ति चरमं लक्ष्यम्। प्रकृतिपुरुषयोः पार्थक्यज्ञानं विवेकख्यातिरुच्यते। आत्मनो व्यावहारिकरूपेण साक्षात्काराय ध्यानधारणादिप्रधानस्य योगस्य स्वीकार आवश्यकः। एवं सांख्यं योगश्च एकस्यैव तत्त्वस्य द्वौ पक्षौ स्तः। बौद्धिकपक्षस्य नामास्ति सांख्यम्। व्यावहारिकपक्षस्याभिधानं भवति योगः। अत एव सनत्सुजातीयमिदं पद्यं संगच्छते—

असाध्यः कस्यचिद् योगः कस्यचित्तत्त्वनिश्चयः।
प्रकारौ द्वौ ततो देवो जगाद परमः शिवः॥

## पौराणिकं दर्शनम्

पुराणेषु स्थले स्थले दार्शनिकतत्त्वानां विवेचनं सरलया सरण्या प्रस्तुतमस्ति। पुराणानि हि विभिन्नै रूपैर्भासमानस्य प्रपञ्चस्य मूले एकस्य सर्वशक्तिमतः तत्त्वस्य सत्तां स्वीकुर्वन्ति। येनेदं समस्तं विश्वं दध्नि सर्पिरिव व्याप्तमस्ति। तदेव तत्त्वं विष्णुपुराणादिषु

विष्णुः श्रीमद्भागवत-ब्रह्मवैवर्तादिषु श्रीकृष्णः, शिवपुराणादिषु शिवः, मार्कण्डेयपुराणदेवी-भागवादिषु शक्तिरिति कथ्यते। ज्ञानिनां कृते स्यान्नाम भगवतो निर्गुणं रूपं मान्यम्, परन्तु सामान्यमानवानां कृते तूपास्यदेवस्य सगुणं स्वरूपमेवोपादेयं ग्रहणीयं स्पृहणीयञ्च पुराणानामभिमतमस्ति।

श्रीमद्भागवतस्य त्रिषु स्कन्धेषु योगदर्शनस्य विशेषवर्णनं विद्यते। द्वितीयस्कन्धे प्रथमद्वितीययोरध्याययोः, तृतीयस्कन्धे २५-२८ अध्यायेषु कपिलमुनिद्वारा स्वमात्रे देवहूत्यै साङ्गोपाङ्गं योगस्योपदेशः कृतोऽस्ति। एकादशस्कन्धे सनकादीन् प्रति हंसरूपधारिणा भगवता योगवर्णनं कृतम्। श्रीकृष्णोद्धवसंवादे ध्यानयोगस्य अणिमादिसिद्धीनां भक्तियोगस्य यमनियमादीनां सांख्यविवेर्ज्ञानयोगभक्तियोगाभ्यां सहाष्टाङ्गयोगस्य रुचिरं वर्णनं कृतमस्ति। मुख्यतो मानवानां कल्याणाय त्रयो मार्गा भगवता उपदिष्टाः—ज्ञानयोगः, भक्तियोगः कर्मयोगश्च। उद्धवं प्रति भगवान् श्रीकृष्णः—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नान्योपायस्तु कुत्रचित्॥
(११।१५।२०)

पुराणेषु भक्त्या सह योगस्यापि सामञ्जस्यमीप्सितमस्ति। शैवपुराणेषु पाशुपत-योगस्य, वैष्णवपुराणेषु भागवतयोगस्य च सम्यग् निरूपणं कृतमस्ति। पुराणानुसारं लीला-पुरुषोत्तमो भगवान् श्रीकृष्णो योगमाश्रित्य यावज्जीवमत्यन्तमाश्चर्यजनकं कार्यं कृतवान्। अत एव बहुशः स योगेश्वरः प्रोक्तोऽस्ति। महर्षिणा व्यासेन पुराणेषु भगवतः श्रीकृष्णस्य जीवनचरितमादितोऽन्तपर्यन्तं योगसिद्धिपूर्णमेवोपस्थापितम्। वस्तुतः प्रेमपयोधौ अखिलात्मनि भगवति संसक्त्या भक्त्या समं कल्याणकारी कश्चनान्यो मार्गो न विद्यते योगिनां कृते—

न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥
(श्रीमद्भागवते ३।२५।२६)

तस्मात् सर्वदर्शनानां लक्ष्यभूता आनन्दघनसच्चिदानन्दपरमात्मतत्त्वप्राप्तिरिव भक्तिद्वारापि परमतत्त्वपुरुषोत्तमप्राप्तिरित्यत्र न काप्यस्ति संशीतिः। यतो हि—

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद् विविधदुःखदवार्दितस्य॥
(श्रीमद्भागवते १२।४।४०)

गर्गसंहितायां माधुर्यखण्डे च--

योगेन सांख्येन शुभेन कर्मणा
न्यायादिवैशेषिकतत्त्ववित्तमैः।

यत्प्राप्यते तच्च पदं विदेहराट्
संप्राप्यते केवलभक्तिभावतः ॥
भक्त्यैव वश्यो हरिरादिदेवः
सदा प्रमाणं किल चात्र गोप्यः ।
सांख्यं च योगं न कृतं कदाचित्
प्रेम्णैव यस्य प्रकृतिं गताः स्युः ॥
( ४।१४।१५ )

अत एव

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ॥
( श्रीमद्भागवते २।३।१० )

इत्यात्मारामस्यामलात्मनः परमपरमहंसस्य भगवतः शुकदेवमुनेः सिद्धान्तः संगच्छते ।

## मुख्याधारग्रन्थाः

संस्कृतवाङ्मये काव्यदृष्ट्या वाल्मीकीयरामायणस्येतिहासदृष्ट्या च महाभारतस्य सर्वोत्कृष्टं स्थानमस्ति । आदिमहाकाव्यं सदपि वाल्मीकीयं रामायणं शब्दालङ्कार-गुणगणालङ्कृतं सरलं भावपूर्णं सुबोधं रुचिकरं च वर्तते । महाभारतन्तु संस्कृतसाहित्य-स्याद्वितीयं ग्रन्थरत्नमेवास्ति, यस्य वैशिष्ट्यं वर्णयता भगवता व्यासदेवेनैव स्वयं वर्णितमस्ति स्वर्गारोहणपर्वणि—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥
( ५।५० )

एवं संस्कृतजगति महाभारतं वाल्मीकीयं रामायणं चेत्युभौ ग्रन्थौ इतिहास इत्या-ख्यया अभिधीयेते । तथाचाष्टादशमहापुराणानि महाभारतं वाल्मीकीयरामायणं च ममानुसन्धानात्मकस्य शोधनिबन्धस्य सन्त्याधारग्रन्थाः । येषु यत्र तत्रोद्धृतानि सांख्ययोग-रत्नानि तदुपयोगिनश्चावश्यकीया विषया आवश्यकतानुसारं यथाक्रमं मयाऽस्मशोधनिबन्धे सङ्कलिताः प्रसङ्गतश्चान्यतोऽपि संगृहीताः सन्ति ।

यद्यपि सांख्ययोगदर्शनयोर्मूलभूतानां सिद्धान्तानां समासतः समालोचनं वेदोपनि-षत्सु तत्तद्दार्शनिकग्रन्थेषु चोपलभ्यते, तथापि पुराणेतिहासयोरपि महर्षिणा व्यासदेवेन आख्या-नोपाख्यानादिद्वारा वेदार्थोपबृंहणपूर्वकं रुचिरया भाषया संक्षेपतः सांख्ययोगदर्शनयोर्विपुलं विवेचनं कृतं विद्यते ।

सांख्ययोगदर्शनविषये बहवो विद्वांसो बहुविधान् विचारान् व्यक्तीकृतवन्तः। तत्र मुख्यं कारणं चास्य सांख्ययोगदर्शनयोः प्राचीनता, लोकप्रियता, उपादेयता, उपयोगिता चास्ति। सांख्ययोगदर्शनयोः वैशिष्ट्यं श्रेष्ठत्वं महत्त्वञ्च सुरभारतीसमुपासकैर्विद्वद्भिर्दर्शनानुशीलनसन्नद्धैः सूरिभिश्च तिरोहितं नास्ति। इमे हि द्वे दर्शने बहुमूल्यरत्नवत् स्वचमत्कारैरेव जगति प्रकाशिते स्तः। पुराणेषु महाभारते चानयोर्बहुवारं स्तवनमस्यैव तथ्यस्य प्रामाणिकतां बिभर्ति। मानवजीवनस्य प्रत्येकक्षेत्रेऽनयोर्दर्शनयोरस्ति प्रचुरः प्रभावः। अपि च सर्वसम्प्रदायेषु चानयोर्दर्शनयोः सिद्धान्तोऽत्राधररूपेण स्वीकृत आदृतोऽनुष्ठितश्च दृश्यते।

## योगदर्शनस्य सार्वजवीनत्वम्।

सर्वधर्मानुयायिन आचार्या योगाभ्यासे संलग्ना आसन्, तद्बलेनैव च स्वस्वानुकूलां परिस्थितिं विधाय स्वस्वधर्मसंस्थापने कृतकार्या अभूवन्। किं हिन्दवोऽन्यधर्मसंस्थापका अपि योगाभ्याससमासक्तमानसा आसन्निति तदितिहासेभ्योऽवगम्यते। श्रूयते मुहम्मदसाहबोऽपि महान् योगाभ्यासी आसीत्। ख्रिष्ट्रीयधर्मानुयायिनां साधूनां साध्वीनां च प्रार्थनासमये आसनादुत्थानस्य कथा श्रूयते। सूफीमतसाधनायां तु ध्यानस्य विशिष्टं महत्त्वं दत्तमस्ति। जैन-बौद्धादिग्रन्थेषु निबद्धे आचार्याणां जीवनचरितेऽपि योगाभ्यासस्य चमत्कारो दृश्यते श्रूयते च सर्वत्र। ग्रीकदेशीयैः प्लेटो प्रभृतिभिः, मिश्रदेशवासिभिर्यहूदीभिः, योरपनिवासिभिः इसाईसंप्रदायिभिश्च राजयोगस्य महती प्रशंसा कृतास्ति। रोमनकैथोलिकसम्प्रदायिभिः स्पिनोजाकान्टे–प्रभृतिभिश्च पाश्चात्त्यदार्शनिकैर्योगस्य बहुशो महत्त्वं वर्णितमस्ति। अतो योगदर्शनस्य सार्वजनीनत्वे न कस्याप्यस्ति विमतिः।

—०—

# रसार्थत्वम्

डॉ० सुदर्शनमिश्रः
सीनियर फेलो
संस्कृत पालिविभागः, काशी-हिन्दू-विश्वविद्यालयः

साहित्यपरम्परायां त्रयोऽर्थाः प्रकल्पिताः—वाच्यार्थः (मुख्यार्थः), लक्ष्यार्थः, व्यङ्ग्यार्थश्चेति। एतेभ्योऽर्थेभ्यो वाचकलक्षकव्यञ्जकानां त्रयाणां शब्दानामपि सूचना प्राप्यते। अस्मिन्नेव सन्दर्भेऽभिधालक्षणाव्यञ्जनारूपाः शब्दशक्तयश्चर्चिताः। मुख्यार्थस्य बोधने शब्दस्य या शक्तिः कार्यं करोति सा शक्तिरभिधापदेनोच्यते। मुख्यार्थस्य बाधे, मुख्यार्थेन सहान्यार्थस्य संबन्धे, रूढौ प्रयोजने च यया विशेषशक्त्याऽन्यार्थो लक्षितो भवति, स विशेषशक्तिरूपशब्दस्यारोपितो व्यापारो लक्षणापदेन व्यवहृतो भवति। यस्य प्रयोजनविशेषस्य प्रतीत्यर्थं लक्षणाश्रयः स्वीक्रियते, तस्य प्रयोजनविशेषस्य विषये शब्दस्य तृतीयो व्यापारो व्यञ्जना। अतोऽभिधया वाच्यार्थः, लक्षणया लक्ष्यार्थः, व्यञ्जनया व्यङ्ग्यार्थश्च प्रतीयते।

काव्यप्रकाशकार आचार्यमम्मटोऽर्थविवेचनप्रसङ्गे—'तात्पर्यार्थोऽपि केषुचित्' इत्यर्द्धकारिकया मीमांसकानां सिद्धान्तं प्रदर्शयन्नर्थस्य चतुर्थमपि प्रकारं प्रदर्शितवान्। स चतुर्थः प्रकारः कारिकयैव स्पष्टः—तात्पर्यार्थ इति। अयं तात्पर्यार्थः 'वाक्यार्थः' इति पदेनापि विवक्षितः।

मीमांसकानां तात्पर्यार्थविषये वादद्वयं विद्यते। प्रथमं तावदभिहितान्वयवादः, द्वितीयं त्वन्विताभिधानवादः। प्रथममतसमर्थकः प्रसिद्धो विद्वान् कुमारिलभट्टः, तस्यानुयायीपार्थसारथिमिश्रश्च। द्वितीयमतसमर्थकः प्रभाकरो गुरुस्तस्यानुयायिनश्च।

## अभिहितान्वयवादः

अभिधया शक्त्या पदैः पदार्थानामुपस्थितिर्भवति। तदनन्तरं वाक्यार्थमर्यादया वक्तुस्तात्पर्यानुसारेण पदार्थानां पारस्परिकसम्बन्ध उपस्थितो भवति। अभिधया शक्त्या प्रतिपादितानां पदार्थानामन्वयादभिहितान्वयवादः। सिद्धान्तेऽस्मिन् पदार्थानां पारस्परिकसम्बन्धः पदैर्न,अपितु वक्तुस्तात्पर्यानुसारेण सम्पद्यते, अतस्तात्पर्यार्थः। अयमेव वाक्यार्थः। यस्य बोधिका तात्पर्या शक्तिः पूर्वोक्ताभ्यः शक्तिभ्यो भिन्ना चतुर्थी शक्तिः स्वीक्रियते।

## अन्विताभिधानवादः

सिद्धान्तेऽस्मिन् अन्वितपदार्थानामेवाभिधया बोधो भवतीत्यन्विताभिधानवादः। वादेऽस्मिन् पदार्थानामन्वयस्य पूर्वसिद्धत्वात्तदवबोधने तात्पर्या शक्तिर्नैवापेक्ष्यते।

## मीमांसकसिद्धान्तो रसबोधश्च

मीमांसकमतानुसारेणेयमेव तात्पर्या शक्ती रसरूपवाक्यार्थस्य बोधिका वर्तते। मीमांसका रसप्रतीतिस्तात्पर्यार्थो वाक्यार्थो वेति स्वीकुर्वन्ति । यथा बलवता सैनिकेनैक एव बाण एकेनैव व्यापारेण शत्रोः कवचच्छेदनम्, मर्मभेदनम्, प्राणहरणंञ्च करोति, तथैव सुकविप्रयुक्त एक एव शब्द एकेनैवाभिधाव्यापारेण पदार्थोपस्थितिमन्वयबोधं रसप्रतीतिञ्च कारयति 'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः।'[१] अतः प्रतीयमानोऽर्थोऽपि वाच्यार्थ एव, तस्योपस्थितिश्चाभिधयैव भवति; यतो हि स एव कवेस्तात्पर्यविषयीभूतोऽर्थः—'यत्परः शब्दः स शब्दार्थः।'[२]

## ध्वनिसिद्धान्तो रसबोधश्च

ध्वनिवादो रसस्य वाच्यार्थत्वम्, लक्ष्यार्थत्वम्, काल्पनिकत्वं वाक्यार्थत्वञ्च निराकृत्य व्यङ्ग्यार्थत्वं प्रतिष्ठापयति।

## रसस्य वाच्यार्थत्वनिषेधः

"रसरूपोऽर्थो वाच्यार्थः" इति स्वीकारे वाच्यार्थस्य वाचकत्वमपेक्ष्यते। अस्यार्थस्य वाचकत्वं रस उताहो श्रृङ्गारादिशब्द एव भवितुमर्हति। रसः श्रृङ्गारादिशब्दो वा रसरूपस्यार्थस्य वाचकः कदापि न भविष्यति, यतो हि रसशब्दस्य श्रृङ्गारादिशब्दस्य वा प्रयोगे रसप्रतीतिर्न भवति, अपि तु काव्ये "विभावानुभावसञ्चारिसंयोगाद्रसनिष्पत्तिः"[3] भवतीति सिद्धान्तः। काव्यप्रकाशान्तर्गतवृत्तिभागे लिखिते प्रमाणेन—

"रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन श्रृङ्गारादिशब्देन वाऽभिधीयेत। न चाभिधीयते। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव।"[४]

रसादिरूपोऽर्थो वाच्यार्थः कदापि न भवितुमर्हतीति स्पष्टम्। अतः काव्यरसयोर्मध्ये नैव वाच्यवाचकभावः सम्बन्धः।

विभावादयो रसरूपस्यार्थस्य वाचका न भवन्ति, असङ्केतितत्वात्। अतो विभावादिरसयोर्मध्येऽभिधाया नैवावसरः—"नाभिधा समयाभावात्।"[५]

अभिधाशक्त्या रसप्रतीतिस्वीकारे तु सर्वेषां मानवानां रसिकानां वा रसप्रतीतिर्भविष्यति; साक्षात्सङ्केतितार्थस्य ज्ञानत्वात्। नैवं व्यवहारे भवति। काव्यश्रवणानन्तरं केवलं

१. काव्यप्रकाशः ५ उ०।
२. तत्रैव।
३. नाट्यसूत्रम्।
४. काव्यप्रकाशः ५ उ०।
५. काव्यप्रकाशः २ उ०।

रसिका एव आनन्दीभवन्ति, अरसिका आनन्दाद् विमुखीभवन्ति। अतो वाच्यवाचकमात्रस्य ज्ञानादप्यरसिका रसं नास्वादयन्ति। एतदेव लक्ष्यीकृत्य ध्वनिकार एवं कथयति—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥[1]

अनया युक्त्या रसस्य वाच्यार्थत्वं निषिद्धम्।

## रसस्य लक्ष्यार्थत्वनिषेधः

काव्यरसयोर्मध्ये नापि लक्ष्यलक्षकभावः। लक्षणाव्यापारस्तत्रैव प्रवर्तते, यत्र सामान्यशब्दस्य (गङ्गादिशब्दस्य) प्रयोगो विशिष्टधर्मयुक्ते पदार्थे (गङ्गातीरादौ) भवति। स्थूलतः सामान्यार्थज्ञापकशब्दस्य विशिष्टार्थे प्रयोगो नाम लक्षणा। रसः काव्यस्य लक्ष्येति स्वीकारे तु काव्य एतादृशानां लक्षकपदानां प्रयोगो भवेद् यो लक्षणया रसप्रतीतिः कारयेत्। नैवं भवति काव्ये।

"गङ्गायां घोषः" इत्यस्मिन्नुदाहरणे गङ्गाशब्दस्य वाच्यार्थो गङ्गास्रोतः। गङ्गास्रोतसि घोषस्य स्थितिरसम्भवेति गङ्गाशब्दस्यास्मिन् वाक्ये स्वार्थप्रतीतावसमर्थत्वाद् गतिः स्खलिता भवति। यदा स स्वार्थप्रतीतावसमर्थस्तदा स्वार्थसम्बद्धं गङ्गातटं लक्षयति।

इयमेवोक्ती रसविषयेऽपि न घटते। काव्ये वर्णिता दुष्यन्तादिनायकास्तत्सम्बद्धविभावादयश्च रसस्य प्रत्यायकाः सन्तीति तु सर्वमान्यो नियमः। एतादृश्यां दशायां दुष्यन्तादीनामभिधायकाः शब्दा एव रसस्य लक्षकाः भवितुं शक्नुवन्ति यदि दुष्यन्तादिशब्दै रसो लक्ष्यते, तदा लक्षणाहेतुत्रयानुसारेण सर्वतः प्रथमं दुष्यन्तादिरूपमुख्यार्थस्य बाधेन भवितव्यम्। परञ्च नाटकादौ दुष्यन्तादिशब्देषु मुख्यार्थबाधस्वीकारे नानार्थकत्वम्। एतेन स्पष्टं यत् काव्ये वर्णिता दुष्यन्तादिशब्दा नैव स्खलद्गतिकाः। तस्माद् द्वितीयस्यार्थस्य (लक्ष्यार्थस्य) प्रतीतिः कथमपि कारयितुं नैव शक्नुवन्ति। एवं रसं लक्षयितुं नैव समर्था इत्याकूतम्। तेन सार्धमेव लक्षणाप्रयोगे प्रयोजनस्य चाऽऽवश्यकता, परञ्चात्र न दृश्यते। अतो रसो न लक्ष्यार्थः। काव्यरसयोर्मध्ये नैव लक्ष्यलक्षकभावसम्बन्ध इत्यर्थः। काव्यप्रकाशकारः प्रमाणयत्यपि—"मुख्यार्थबाधाद्यभावनान्न पुनर्लक्षणीयः"।[2]

## रसस्य काल्पनिकतानिषेधः

केचिद् 'रसः काल्पनिकः' इति स्वीकुर्वन्ति। तन्मतानुसारेण कविः स्वकाव्यशब्दान् स्वेप्सितरसस्य काल्पनिकसङ्केतं कल्पयति। अनेन प्रकारेण तत्तच्छब्दानां प्रयोगेण काव्ये तत्तद्रसस्य प्रतीतिर्भविष्यतीति कल्पनां करोति। इदमपि नोचितम्—

---

१. ध्व० १।७।
२. का० प्र० ५ उ०।

'रसः काल्पनिकः' इति स्वीकारे तेषामेव पाठकानां रसप्रतीतिर्भविष्यति येषां कवेः कल्पनायाः कल्पितसङ्केतस्य च ज्ञानम्। सर्वेषां रसिकानां रसास्वाद एकेन सार्धमेव भवतीत्यस्मिन् विषये न कश्चन विरोधः। अतो रसो न काल्पनिकः।[१]

## रसस्य वाक्यार्थत्वनिषेधः

मीमांसकाः 'रसरूपोऽर्थो वाक्यार्थः' इति स्वीकुर्वन्ति। इदमपि नैव स्वीकर्तुं शक्यते, यतो हि रसरूपव्यङ्ग्यस्य प्रतीतिः सर्वदा तृतीयक्षणे भवति। अतः स तृतीयकक्षाविषयः।

भ्रम धार्मिक विश्रब्धः स श्वाऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥

इत्यस्मिन् पद्ये सर्वतः प्रथमं प्रथमक्षणे प्रत्येकपदस्याभिधाशक्त्या स्वतन्त्ररूपेण वाच्यार्थबोधः। द्वितीयक्षणे क्रियाकारकसंसर्गादन्वयाद्वा वाक्यार्थबोधः। तृतीयक्षणे 'न भ्रम' इत्यस्य रसादिरूपस्य व्यङ्ग्यस्य बोधः। अतो वाक्यार्थो द्वितीयकक्षाविषयः, रसादिरूपो व्यङ्ग्यस्तृतीयकक्षाविषय इति स्पष्टम्। द्वितीयकक्षाविषयस्तृतीयकक्षाविषयः कदापि न भवितुमर्हति। अतो रसो न वाक्यार्थः।

"विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः" इत्यत्र विधिवाक्यस्य प्रयोगो विहितः। परञ्चास्य वाक्यस्य तात्पर्यं निषेधरूपेऽर्थेऽस्ति। "मा चास्य गृहे भुङ्क्थाः" इति निषेधरूपस्य वाक्यार्थस्य प्रतीतिः सर्वदा तृतीयक्षण एव भवति। अतः 'विषं भुङ्क्ष्व' इत्युदाहरणमेव सूचयति यत् तात्पर्यरूपवाक्यार्थोऽपि तृतीयकक्षाविषय इति पूर्वपक्षः।

उत्तरपक्षस्तु "तृतीयकक्षापर्यन्तं तात्पर्यवृत्तेर्नैव विषयः" इति समादधति। प्रथमकक्षायाम् 'विषं भुङ्क्ष्व' इत्यस्मिन्नुदाहरणे व्यस्तैः पदैरर्थप्रतीतिर्भवति। द्वितीयकक्षायामन्वयाद्वाक्यं प्रकरणसम्मतमर्थं बोधयति। अयमेव प्रकरणसम्मतोऽर्थो वाक्यार्थः। एतत्पर्यन्तमेव द्वितीयकक्षा न समाप्यते, अपि तु 'मा चास्य गृहे भुङ्क्थाः' एतत्पर्यन्तं द्वितीयकक्षाविषयः। वाक्ये चकारग्रहणं द्वयोर्वाक्ययोरेकत्वं सूचयति। 'विषं भुङ्क्ष्व' इति द्वितीयकक्षाया विश्रान्तिः 'मा चास्य गृहे भुङ्क्थाः' इति निषेधरूपेण वाक्यार्थे भवति। अतो निषेधस्य प्रतीतिर्द्वितीयकक्षाविषयिकैव। तृतीयकक्षायामेतद्गृहे भोजनं विषभक्षणादपि मन्दतरमिति रूपात्मकस्य व्यङ्ग्यार्थस्य प्रतीतिर्भवति, यस्य पुष्टिर्व्यञ्जनया सम्पाद्यते।

रसयुक्तेषु काव्येषु प्रथमक्षणे काव्योपात्तशब्दाद् विभावादयो विभाव्यन्ते। विभावादिभी रसचर्वणा। अत्र काव्योपात्तशब्दाः प्रथमकक्षाविषयाः, विभावादयो द्वितीयकक्षाविषयाः रसबोधश्च तृतीयकक्षाविषयः।

## रसस्य व्यङ्ग्यार्थत्वनिषेधः

दशरूपककारो धनञ्जयः काव्यरसयोर्मध्ये व्यङ्ग्यव्यञ्जकभावस्य निषेधार्थं निम्नलिखितां कारिकां प्रस्तौति—

---

१. द० रू० ४ प्र०।

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथाक्रिया ।
वाक्यार्थः कारकैर्युक्ता स्थायीभावस्तथेतरैः ॥[१]

यथा क्रिया काव्ये साक्षाच्छब्दोपात्ता, उताहो बुद्धिस्था, प्रकरणवशात् कारकैः सह युक्तीभूय वाक्यार्थोभवति, तथैव स्थायीभावो विभावादिभिः सह संयुज्य वाक्यार्थ एवेति कारिकार्थः ।

कस्मिंश्चिदपि लौकिकवाक्ये द्विप्रकारकं पदमस्माकं दृष्टिपथमवतरति । अनयोर्मध्ये एकं कारकपदम्, द्वितीयञ्च क्रियापदम् । भर्तृहरिणाऽन्यैर्वैयाकरणैश्चैतौ सिद्धपदसाध्यपदेन च विवक्षितौ । वाक्यस्य तात्पर्यं साध्यरूपायां क्रियायामेव निहितं वर्तते । कस्मिंश्चिदपि वाक्ये क्रियारूपो वाक्यार्थ आवश्यकम् । भवेत्तस्मिन् वाक्ये क्रियावाचकशब्दस्य साक्षात्प्रयोगः, उताहो बुद्धिस्थः प्रयोगः । उदाहरणार्थम् 'गाम् बधान' अस्मिन् वाक्ये क्रिया श्रूयमाणा, 'द्वारं द्वारम्' इत्यस्मिन्नुदाहरणे च क्रिया श्रूयमाणा प्रयुक्ता । प्रथमे दृष्टान्ते वक्ता क्रियायाः साक्षात्प्रयोगं करोति, द्वितीये तु बुद्धिस्थं प्रयोगम् । एतस्मिन्नुदाहरणद्वये कारकैः पुष्टीभूय क्रियैव वाक्यार्थत्वमावहति । कारकैः परिपुष्टा क्रियैव वाक्यार्थः, वाक्यस्य तात्पर्यार्थ इति ।

अयमेव नियमः काव्यविषयेऽपि सङ्घटते । काव्ये क्वचिद् रत्यादिशब्दानां वाचकपदानां साक्षात्प्रयोगो दृश्यते । "प्रीत्यै नवोढा प्रिया" इत्यस्मिन्नुदाहरणे रतिभावस्य वाचकशब्दस्य 'प्रीत्यै' इत्यस्य साक्षादुपादानम् । एवमन्येष्वपि स्थलेषु रतेः शृङ्गारस्य वा प्रतिपादकशब्दानां साक्षात्प्रयोगो न प्राप्यते । एतादृशेषु स्थलेषु प्रकरणवशात् काव्यद्वारा वाच्यरूपे उपात्तैर्विभावानुभावसंचारिभावैः सह स्थायीभावस्याविनाभावसम्बन्धात् स्थायीभावः सहृदयचित्ते तथैव स्फुरति यथा प्रकरणादिवशात् कस्मिन्नपि काव्ये कारकैः सम्बद्धा क्रिया । एतेषां स्थायीभावानां तत्तद्विभावानुभावसञ्चारिभावानां तु काव्ये साक्षादुपादानत्वात् साक्षाद् वाच्यरूपे प्रतिपत्तिर्भवत्येव । एते संस्कारपरम्परया विभावादीन् पूर्वानुभवमाधृत्य रत्यादिस्थायीभावं पुष्णन्ति । अनेन प्रकारेण वाच्यरूपेणोपात्तैर्विभावादिभिः प्रतीतः, काव्ये वाच्यरूप उपात्तः प्रकरणादिना वा बुद्धिस्थरूपेण प्रतीतो रत्यादिस्थायीभावो व्यञ्जनाविषयो नास्ति, परञ्च काव्यार्थ एव ।

पूर्वपक्षिभिराक्षिप्यते—रत्यादिप्रतीयमानरसरूपोऽर्थो काव्ये प्रयुज्यमानानां शब्दान वाच्यार्थस्तु कथमपि भवितुं नार्हति । वाक्यं तु पदानां सङ्घातः, पदानां वाच्यार्थसमूह एवं वाक्यार्थः । एतादृश्यां दशायाम् "भ्रम धार्मिक विश्रब्ध……" इत्यस्मिन्नुदाहरणे निषेधवाचकपदानामभावे पदार्थाभावाद् निषेधरूपोऽर्थो वाक्यार्थो न भविष्यति । रसविषयेऽप्येवमेव चिन्तनीयम् ।

"अपदार्थो रसादिर्नैव वाक्यार्थः" इत्येतत्कथनमशक्यम् । तात्पर्यशक्त्या वाक्यार्थस्य बोधो भवति । तस्याः पर्यवसानं वक्तृप्रयोजनपर्यन्तं भवति । यथाऽभिधाशक्तेः साध्यो

---

१. द० रू० ४।३७ ।

वाच्यार्थः, लक्षणायाः लक्ष्यार्थस्तथैव तात्पर्यशक्तेः साध्यो वाक्यार्थः । इयं शक्तिर्वक्तुः तात्पर्यं प्रतिपादयति । अतो यावत्पर्यन्तं वक्तुः कार्यं प्रसृतं भविष्यति तावत्पर्यन्तं तात्पर्यशक्तेः क्षेत्रं भविष्यति । यदि वक्तुर्निषेधार्थ एवाभीष्टः, तदा निषेधपर्यन्तं तात्पर्यशक्तेः सत्ता । तस्य निषेधार्थरूपस्यार्थस्य द्योतनानतरमेव तात्पर्यशक्तिः क्षीणा भविष्यति । जगति सर्वाण्येव वैदिकभाषायाः लौकिकभाषायाश्च वाक्यानि प्रयोजनार्थमेव प्रयुज्यन्ते, प्रयोजनसिद्धिरेव तस्य वाक्यस्य लक्ष्यता । वाक्यस्याप्रयोजकत्वस्वीकारे उन्मत्तप्रलपितमिव तस्य वाक्यस्य न भवितुं शक्यते लौकिकोपयोगः । प्रयोजनहीनवाक्यप्रयोगे वक्त्रे श्रोत्रे च कस्यचिदपि भावस्य प्रतिपत्तिः उन्मत्तप्रलपितमिवानर्थकत्वं यास्यति । अतः कस्मिंश्चिदपि लौकिके वैदिके वा वाक्ये प्रयोजनपरत्वमावश्यकमिति स्पष्टम् ।

काव्ये शब्दमाध्यमेन विभावादयः प्रतीयन्ते, विभावादिमाध्यमेन स्थायीभावानां रसादीनाञ्च प्रतिपत्तिः । एतादृश्यां दशायां काव्यशब्दानां विभावादिरूपार्थैः सहान्वयबोध-रूपसम्बन्धः । काव्ये तदभिधायकानां शब्दानां प्रयोग एव विभावादीनां प्रतीतिर्भविष्यति, नान्यथा । एवञ्च, काव्योपात्तशब्दा एव विभावादीनां प्रतीतिं कारयन्ति । एतेषु काव्योपात्त-शब्देषु विभावादिषु च निरतिशयसुखास्वादात्मकरसरूपालौकिकानन्दस्य चर्वणा न प्राप्यते, अपितु स रस एतैः प्रतिपाद्यः, काव्योपात्तशब्दा विभावादयश्च प्रतिपादकाः । अनेन प्रकारेण काव्योपात्तशब्दानां प्रवृत्तिः, तेषां प्रयोगश्च विभावाद्यर्थं स्थायीभावार्थं रसप्रतिपत्यर्थञ्च प्रवर्तते । काव्य-काव्योपात्तशब्दविभावादि-स्थायीभाव-रसादीनाञ्च परस्परसम्बन्धपर्यालोचनया काव्यरूपस्य केवलमेकमेव प्रयोजनमस्माकं दृष्टिपथमायाति । तदस्ति सहृदयचित्ते आन-न्दोद्भूतिः । एतत्प्रयोजनव्यतिरिक्तं काव्यस्य किञ्चिन्नान्यत्प्रयोजनम् । एवञ्च, काव्यप्रयुक्त-वाक्यस्य प्रतिपादिका शक्तिः ( तात्पर्याशक्तिः ) काव्यप्रतिपाद्यतत्तद्रसादिभिराकृष्टा भवति, कार्यरूपरसस्तां शक्तिं क्रियार्थं प्रेरयति । अतो वाक्ये प्रतिपादिका तात्पर्याशक्ती रसरूप-स्वार्थस्य प्रतीत्यर्थं विभावाद्यन्यसाधनान्यपेक्षते । तेषां विभावादीनां प्रतिपादनद्वारा स शक्ती रसस्य प्रतीतिं कारयित्वा पर्यवसिता भवति । रसप्रतीतिसरण्या काव्यप्रयुक्तपदानामर्थाः ( पदार्थाः ) विभावादयः । एतैर्विभावादिभिः संसृष्टो रत्यादिस्थायीभावः काव्यस्य-वाक्यार्थः ।

गीतादिश्रवणानन्तरमानन्दोत्पत्तिर्भवति । गीतादिस्तस्यानन्दस्य नैव वाचकः, न च स आनन्दो वाच्यार्थः । काव्यविषयेऽप्येवमेव वक्तुं शक्यते । काव्यरसयोर्मध्ये नैव वाच्य-वाचकभावसम्बन्धः, रसानन्दस्तु नैव वाच्यार्थ इति पूर्वपक्षः ।

एष दृष्टान्तः काव्यविषयेऽपि दातुं न शक्यते । काव्यैः सर्वे मानवा नैवानन्दी-भवन्ति । ये विभावादिज्ञानयुक्ताः रत्यादिभावभावनया च युक्तास्तेषामेव रसिकानामा-नन्दानुभूतिर्भवति । ये विभावादिज्ञानरहिता रत्यादिभावभावनया च शून्यास्तेषामरसिका-नामानन्दानुभूतिर्न भवतीति सिद्धान्तपक्षः ।

"रसो वाक्यार्थः" इति निश्चिते सिद्धं भवति यद् दार्शनिकैरालंकारिकैश्च स्वीकृतयाऽभिधयैव शक्त्या समस्तानां श्रूयमाणानामश्रूयमाणानाञ्च पदार्थानां प्रतीतिर्भविष्यति। अतो व्यञ्जनाशक्तेः कल्पनाप्रयासो व्यर्थः।

दशकरूपकप्रणेता काव्यरसयोर्मध्ये भाव्यभावकभावसम्बन्धं स्वीकरोति। काव्यं भावकम्, रसो भाव्यः। सहृदयचित्ते स्थायीभावस्य रसस्य वा चर्वणा भवति। एषा चर्वणा भावनाऽपि निगद्यते। एनां भावनामाधृत्य काव्यं भावकं रसश्च तस्य भाव्यः। रसादयः सहृदयचित्ते स्वत एव प्रादुर्भवन्ति, तत्तद्रसानुकूलविशिष्टविभावादिश्च काव्यं तेषां भावनां जनयति। निम्नप्रमाणमवलम्ब्य काव्यरसयोर्मध्ये भाव्य-भावकभावसम्बन्धः स्थापयितुं शक्यते।

भावाभिनयसम्बन्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमीभावा विज्ञेया नाट्ययोक्तृभिः ॥[१]

भावाः, भावैरभिनयैश्च, भावाभिनयैर्वा रसान् भावयन्ति। अतो नाट्यप्रयोक्तार एनम् "भाव" इति पदेन व्यवहरन्ति। अनेन प्रमाणितं यत् स्थायीभावा रसान् भावयन्ति। अतो रसो भाव्यः, काव्यरसयोर्मध्ये च भाव्यभावकसम्बन्धो युक्तः।

## दशरूपकमतपरीक्षणम्

अस्माभिर्परीक्षणीयं यद् दशरूपके प्रतिपादिता तात्पर्या शक्तिर्या यावत्कार्यप्रसारिणी वर्तते, सा अभिहितान्वयवादिभिः कल्पिता तात्पर्या शक्तिरेव, तद्व्यतिरिक्ता वा ? यदीयं शक्तिः सैव वर्तते, तदा तस्या सीमितं प्रयोजनम्, नत्वसीमितम्। पदार्थसंसर्गबोध एव तस्याः प्रयोजनम्, तदधिकं नैव किञ्चित्। अतः प्रतीयमानस्यार्थस्य बोधस्तत्सामर्थ्याद्बहिंस्तिष्ठति सा तु द्वितीयकक्षानिविष्टपदार्थसंसर्गबोधपर्यन्तमेव सीमिता। तृतीय-चतुर्थ-कक्षानिविष्ट-व्यङ्ग्यार्थपर्यन्तं तस्या नैव गतिः। अतस्तात्पर्याशक्तिर्या यावत्कार्यप्रसारिणी स्यात्, यथापेक्षं सर्वत्र प्राप्येत्, सा तद्व्यतिरिक्ता काचिदन्यैव शक्तिः स्वीकर्तव्या। अस्यां दशायां ध्वनिवादिभिः सह तस्यास्तात्पर्यशक्तेः नाममात्रेण पृथक्त्वम्। अभिधा-लक्षणा-तात्पर्याशक्तिभ्यो भिन्ना काचिदन्या शक्तिरिति स्वीकारे व्यञ्जनायाः स्वयमेवावसरः, याऽभिहितान्वयवादे प्रतिपादिततात्पर्यशक्तेर्व्यतिरिक्ता रसबोधने च समर्था।

## तात्पर्यशक्त्या व्यङ्ग्यार्थबोधनिराकरणम्

अभिधया पदार्थोपस्थितिर्भवति। ततोऽभिहितान्वयवादिनस्तेषामुपस्थितानां पदार्थानां परस्परसम्बन्धस्य बोधनार्थं तात्पर्याशक्तिं कल्पयन्ति। अनया पदार्थसंसर्गरूपवाक्यार्थस्यैव बोधो भवति। अतोऽतिविशेषभूतस्य प्रतीयमानार्थस्य बोधनार्थं तस्यां नैव सामर्थ्यम्। तस्यावबोधस्तु, व्यञ्जनयैव भवितुमर्हति।

---

१. द० रू० ४ प्र० उद्धृता। ( नाट्यशास्त्रात् )।

इयमभिहितान्वयवादे प्रकल्पिता तात्पर्याशक्तिर्व्यवहारे प्रयुक्ततात्पर्याद् भिन्ना, सीमाबद्धत्वात्। अस्याः सीमा तु पदार्थसंसर्गरूपवाक्यार्थपर्यन्तमेव। व्यवहारप्रयुक्ततात्पर्येण सहास्यास्तात्पर्यशक्तेर्नैव सादृश्यम्।

दशरूपकप्रणेतुर्मते काव्यरसयोर्मध्ये भाव्यभावकसम्बन्धः स्वीकृतः। एतत्सम्बन्धार्थं भावना नामको व्यापारः कल्पितः, स चानुभवासिद्धः। भावनाव्यापारः साहित्यपरम्परायां नैव प्रचलितः। अतोऽनुभवासिद्धत्वाद् भट्टनायककल्पितभावकत्वभोजकत्वरूपानुभवविहीनव्यापारकल्पनेव मान्यतां प्राप्तुं न शक्यते। अतः काव्यरसयोर्मध्ये भाव्य-भावकसम्बन्धस्वीकरणममान्यम्।

व्यञ्जनां विना साहित्यशास्त्रम् एकपदमप्यग्रे गन्तुं नैव समर्थम्। अभिधया कथने न कापि चमत्कृतिः, न च कोऽपि रसः। रसहीना शुष्कोक्तिः सहृदयैर्न ग्राह्या, नोपादेया। भवेयुः सन्तुष्टा नैयायिका वैयाकरणमीमांसका वेदान्तिनश्चैतादृशैर्यथार्थाभिधानैः, परञ्च साहित्यमर्मज्ञाः सहृदया नैव सन्तुष्टिं यास्यन्ति, यतो हि साहित्यशास्त्रं रसपरकम्, रसाभिव्यक्त्यै व्यञ्जनावश्यकी। अतः काव्यरसयोर्मध्ये न वाच्यवाचकभावसम्बन्धः, न वा लक्ष्यलक्षकभावसम्बन्धः, न च भाव्यभावकभावसम्बन्ध एव, अपितु व्यङ्ग्यव्यञ्जकभावसम्बन्धः। "तस्मादसौ ( रसरूपोऽर्थः ) व्यङ्ग्य एव"[१]



१. का० प्र० ५ उ०।

# नाडीचक्रम्

डॉ० ताराशङ्करवैद्यः
प्राध्यापकः
आयुर्वेदमहाविद्यालयः, वाराणसी

प्रायशोऽद्यतनाः शारीरविद्याविशारदाः कथयन्ति—यादृशं शारीरज्ञानं पाश्चात्यवैज्ञानिकानामस्ति, तादृशं प्राच्यवैज्ञानिकानां नाऽसीत्। 'ग्रेज् एनाटोमी' इत्यादिकानां पाश्चात्यग्रन्थानामध्ययनेन तेषामियमुक्तिः सत्यं प्रतिभाति। यतस्तेषु शारीरज्ञानस्य सविशदं सचित्रं प्रत्यक्षानुपूर्विकं ज्ञानं सरलतयोपलब्धुं शक्यते। तादृशं वैशद्यं विस्तारश्च साम्प्रतं प्राच्येषु ग्रन्थेषु नहि प्राप्तुं शक्यते। हन्त एतस्मादेव कारणाद् ज्ञानलवदुर्विदग्धा जना आयुर्वेदीयां शारीरविद्यामाक्षिपन्ति, उद्घोषयन्ति च "शारीरे सुश्रुतो नष्टः"। एतस्मादुद्घोषात् "शारीरे सुश्रुतो श्रेष्ठः" इयमुक्तिरतथ्येन प्रतिभाति। अयमपराध आयुर्वेद—ज्ञानामेव शिरसि पतति, यतस्ते स्वकीयसाहित्यस्य प्रचारे तथा सँलग्ना न सन्ति, यथा पाश्चात्त्याः। प्राचीनवाङ्मयस्याध्ययनात् सर्वमुपलब्धुं शक्यते, यदि तस्य सुप्रकाशनं सुप्रचारश्च भवेत्, तर्ह्यायुर्वेदीयस्य शारीरस्य परिवादं विहायाभिवादनं करिष्यन्ति सर्वे पाश्चात्त्यविद्याविशारदाः।

भारतीयानां शारीरज्ञानस्य दृश्यमेकम् "नाडीचक्रम्" वर्णयित्वा सुविज्ञानां जनानां सन्निधौ समुपस्थास्यामि—

नाभिमण्डलमासाद्य कुक्कुटाण्डमिव स्थितम्।
नाडीचक्रमिह प्राहुस्तस्मान्नाड्यः समुद्गताः ॥
सार्धत्रिकोट्यो नाड्यो हि स्थूलासूक्ष्माश्च देहिनाम्।
नाभिकन्दनिबद्धास्तास्तिर्यगूर्ध्वमधः स्थिताः ॥

( भूधरकृते नाडीदर्पणे )*

---

* नाडी चक्रस्य चित्रमपर पृष्ठे वर्तते।




## चक्रनाभिः कूर्मश्च

### चक्रम्

चक्रम्—( १ ) नेमिः, ( २ ) आरकः, ( ३ ) चक्रनाभिः ।

### कूर्मः

कूर्मः—अग्रभागे—( १ ) नेत्रचेष्टनीः ( तृतीया नाडी ) ।
पुच्छभागे—( २ ) नेत्रपार्श्विकी ( षष्ठी नाडी ) ।
वामभागे—( ३ ) कटाक्षिणी ( चतुर्थी नाडी ) ।
( ४ ) त्रिधारा ( पञ्चमी नाडी ) ।
( ५ ) श्रुतिनाडी ( अष्टमी नाडी ) ।
( ६ ) मौखिकी ( सप्तमी चेष्टावाहिनी नाडी )
( ७ ) सप्तमी सांवेदनिकी नाडी ।
दक्षिणभागे— वामभागसदृशः ।
( ८ ) चक्रनाभिवद् दृश्यः ।

एतादृशीं रचनां मस्तिष्कस्थिते कूर्मं ( पॉन्स ) इत्याऽख्याङ्गस्य पार्श्वे सरलतया द्रष्टुं शक्नुवन्ति शवच्छेदनपण्डिताः। भवन्तोऽपि चित्रे द्रष्टुं शक्नुवन्ति। पश्यन्तु तत्रभवन्तः कुक्कुटाण्डाकारां नाडीचक्ररचनाम्। यां वर्षसहस्रेभ्यः पूर्वमेव भारतीया महर्षयोऽपश्यन्। तत एव शरीरे चतुर्दिक्षु नाड्यः समुद्गताः सन्ति, इत्यपि मानवशवं व्यवच्छिद्य द्रष्टुं शक्येत। तत्र निबद्धानां नाडीनां नाडीसूत्राणाञ्च संख्या असंख्येया विद्यतेऽति—सौक्ष्म्यात्। किन्तु यादृशी स्थितिर्मस्तिष्के, विशेषतो नाडीचक्रेऽस्ति, तां सूक्ष्मतया द्रष्टुं परिगणयितुं च शक्यते चेत्, तर्हि तासां नाडीनां नाडीसूत्राणाञ्च संख्या सार्धत्रिकोटिर्भवतीति सम्भावना वरीवर्ति। भवतु नाम या वा का अपि संख्या, किन्तु कुक्कुटाण्डत्वं तु तत्रास्त्येव।

नाभिस्तु तदङ्गं कथ्यते, यतश्चतुर्दिक्षु 'आरा आरकाः' वा निस्सरन्ति। चक्रनाभिस्तु भवद्भिर्विदिता एव, यतश्चक्रे चतुर्दिक्षु आरा निस्सरन्ति। चक्रनाभिरिव शरीरेऽपि नाभिर्वर्तते। तद्यथा—

नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिव्युपाश्रिताः।
सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः॥

( सु० शा० ७।५ )

सर्वासां शिराणां प्रसारणं नाभित एवेत्यपि स्पष्टतया लिखितम्—

यावत्यस्तु शिराः काये सम्भवन्ति शरीरिणाम्।
नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः॥

( सु० शा० ७।४ )

अपि च—

शिराधमन्यो नाभिस्थाः सर्वा व्याप्य स्थितास्तनुम्।

( शार्ङ्गधर० )

चतुर्विंशतिधमन्यो नाभिप्रभवा अभिहिताः।

( सु० शा० ६।३ )

नाभिरेका उदरेऽपि दरीदृश्यते। तत एवापि चक्रनाभिरिव चतुर्दिक्षु धमन्यः प्रसरन्ति। अर्भकशरीरे एवमेव स्थितिं पश्यन्ति प्रत्यक्षदर्शिनः। मस्तिष्कस्थितं नाभिमण्डलं यत्र कुक्कुटाण्डमिव नाडीचक्रं वर्तते, उदरस्थिताया नाभेः शक्तिरेव। सर्वैः शारीरविद्याविशारदैः स्वीक्रियन्ते, यत् शरीरे स्थितानां सर्वेषामङ्गानां शक्तिर्मस्तिष्के वर्तते। यतो ह्यङ्गानां सञ्चालनं नियन्त्रणं वा तत एव भवति। एतन्न्यायानुसारं मस्तिष्कस्थितं नाभिमण्डलमुदरस्थस्य नाभेः शक्तिरेवास्ति, नाऽन्यत् किञ्चित्।

# नाडीचक्रम्



कूर्मस्य दृश्यमेकम्

न— नाडीचक्रस्य कुक्कुटाण्डवद् दृश्यः

प्रागुक्तनाडीचक्रं नाभिकन्दो वा 'कूर्म' इत्याख्यस्याङ्गस्यैकपार्श्वे विराजते। कूर्मतः स्थूलतमाया नाड्यो निस्सरन्ति, तासामपि वर्णनं प्राच्यशास्त्रेष्वस्ति।

यथाहि— तिर्यक्कूर्मो देहिनां नाभिदेशे वामे वक्त्रं तस्य पुच्छं च याम्ये।
ऊर्ध्वे भागे हस्तपादौ च वामौ तस्याधस्तात् संस्थितौ दक्षिणौ तु ॥
( कणादकृते नाडीविज्ञाने )

अपि च— वक्त्रे नाडीद्वयं तस्य पुच्छे नाडीद्वयं तथा।
पञ्च पञ्च करे पादे वामदक्षिणभागयोः ॥
( तत्रैव )

कूर्मस्य चित्रे इयं संरचना स्पष्टतया दृश्यते। चक्रनाभिकूर्मयोरपि सादृश्यं पश्यन्त्वत्रैभवन्तो भवन्तः। 'कूर्म' इति नामकरणेऽस्याकारस्तु कारणमस्ति। कार्यमप्यस्य मध्यस्थता वर्तते। मध्यस्थानां तु कूर्मवृत्तिः प्रसिद्धैव। अयं कूर्मो वैद्यानां कृते नाडीपरीक्षणस्य तत्त्वम्। कूर्मभेदादेव स्त्रीपुरुषयोर्नाडीपरीक्षणे वामदक्षिणहस्तयोः प्राधान्यमस्ति।

यथाहि— स्त्रीणामूर्ध्वमुखः कूर्मः पुंसां पुनरधोमुखः।
अतः कूर्मव्यतिक्रान्तात् सर्वत्रैव व्यतिक्रमः ॥

लक्ष्यते दक्षिणे पुंसां या च नाडीविचक्षणैः।
कूर्मभेदेन वामानां वामे चैवावलोक्यते ॥
( वासवराजीये काणादीये च नाडीविज्ञाने )

स्त्रीपुंसयोः कूर्मयो रचनायां कार्ये वा उपर्युक्तदृष्ट्यान्तरं दृश्यते, न वेति तु न जाने। हन्त ! वैद्यविद्याविशारदाः शवव्यवच्छेदका वास्मिन् विषये किञ्चिदपि वक्तुं दर्शयितुं वा न शक्नुवन्ति। किन्तु दृढेन चेतसा निवेदयामि यत् कूर्मरचनायां क्रियायां वान्तरसम्बन्धिप्राच्यानां ज्ञानं तथ्ययुक्तमेव। यतो ह्यवशिष्टं सर्वं वर्णनं सत्यमेवेति सिद्धम्, तर्हि कूर्मस्यान्तरसम्बन्धि ज्ञानमतथ्यं नहि भवितुं शक्नोति। यद वा तद् वा भवतु। विषयोऽयमनुसन्धानस्य। शारीरविद्याविशारदोऽस्यां दिशि प्रचलन्तु।

नाडीपरीक्षणे कूर्मस्य मौलिकतां प्रत्यक्षतया द्रष्टुं शक्यते। यद्यपि शरीरे षोडश-स्थानेषु नाडीपरीक्षणं कर्तुं शक्यते। यथाहि—

पाणिपात्कण्ठनासाक्षिकर्णजिह्वा च मेद्रगाः।
वामदक्षिणतो लक्ष्याः षोडशप्राणबोधकाः ॥
( वासवराजीयम् )

तथापि—

अङ्गुष्ठमूलसंस्था तु विशेषेण परीक्ष्यते।
( रावणकृता नाडीपरीक्षा )

इयमेव नाडी "जीवनाडी" इति नाम्ना प्रसिद्धा तद्विषेषु। यदुक्तं रावणेन—

अस्ति प्रकोष्ठगा नाडी मध्ये काऽपि समाश्रिता।
जीवनाडी तु सा प्रोक्ता नन्दिना तत्त्ववेदिना ॥

सामान्यावस्थायामियमेव नाडी जीवसाक्षिणी। यथा हि शार्ङ्गधराचार्येणोक्तम्—

करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥
( शा० पूर्व ख० )

अस्या जीवनाड्या अन्यासां सर्वासां नाडीनां प्रागुक्तानां षोडशप्राणप्रबोधिकानां वा नाडीनां मूलं स्थूलतया हृदयमेव। सूक्ष्मतया विचारे सति हृदयस्यापि मूलं नाडीनां मूलं भविष्यति। हृदयस्य स्वतः सञ्चालकत्वेऽपि प्राणदानाड्या ( वागसनर्व ) स नियन्त्रितो भवतीति जानन्ति सर्वे तद्विद्याः। सेयं नाडी मस्तिष्कस्थितात् पूर्वोक्तात् कूर्मात् ( नाडी-चक्राद् नाभिकन्दाद् वा ) निस्सरति। अतः स्वत एव सिद्धं यद् नाडीनां मूलं नाडीचक्रं कूर्मो वा अस्ति। कूर्मे हृदयस्य कोष्ठानीव कोष्ठानि सन्ति। तत्र वक्षसि स्थितस्य हृदयस्यशक्तिर्विराजते।

लघुतमोऽयं निबन्ध आयुर्वेदज्ञानां योगिनां वा शारीरज्ञानस्य पाण्डित्ये प्रामाण्ये-नोपस्थाप्यते।

———

# गरुडपुराणविषयानुक्रमणी

सङ्कलयिता—प० मध्वाचार्यः

( पूर्वाङ्कतोऽनुवृत्ता )

—क्रमशः

## 'दि जर्नल आफ दि रायल एशियाटिक सोसाइटी, लन्दन'

इति पत्रिकायाः १ बन्धात् १०२ बन्धं ( १८३४-१९७० ईसाब्दं च ) यावत

# प्रकाशितप्राच्यविद्याविषयाणां सूची

६. ऋग्वेदे पौराणिकज्ञानार्जननिरूपणम्

( माइथालोजिकल स्टडीज इन दि ऋग्वेद Mythological studies in the Rigveda. )

—ए. ए. मैक्डोनेल, एम. ए., A. A. Macdonell, M. A.

[ न्यु सि०, बन्धः २५,१८९३ ], पृ० ४१६-४६६ ( पृ० ७८ )

७. पृथिव्या गर्भाधानविषयको विचारः—अथर्ववेदः १२/१ द्रष्टव्यः

( आन दि वैदिक कन्सेप्सन् आफ दि अर्थ—अथर्ववेद १२, १ On the Vedic Conception of the Earth—Atharvaveda, xii, 1.

—चार्ल्स ब्रूस, एस्क. Charles Bruce, Esq.

[ बन्धः १६,१८६२ ], पृ० ३२१-३३६ ( पृ० १६ )

८. बृहद्देवताया वृत्तनिरूपणम्

( दि मीटर आफ दि बृहद्देवता The Metre of the Bṛhaddevata. )

—ए. बी. कीथ, एम्. आर. ए. एस्. A. B. Keith, M. R. A. S.

[ न्यु सि०, बन्धः ३८,१९०६ ], पृ० १-१० ( पृ० १० )

९. वेदस्य भाष्योपरि विचारः

( आन दि इण्टरप्रिटेशन आफ दि वेद On the Interpretatoin of the Veda. )

—जे. मूर, एस्क. J. Muir, Esq.

[ न्यू सि०, बन्धः २, भा० २,१८६६ ], पृ० ३०१-४०२ (पृ० १००)

१०. वैदिकबलिदाने व्यवहृतानामुपकरणानां भाजनानां च निरूपणम्

( इम्प्लीमेण्ट्स ऐण्ड वेसेल्स यूज्ड इन वैदिक सैक्रिफाइस Implements and Vessels used in vedic sacrifice. )

—रघुवीर Raghuvira.

[ न्यु सि०, बन्धः ६६, १९३४ ], पृ० २८३–३०५ ( पृ० २१ )

११. वैदिकाख्यानस्य तथा भारतीयनाटकस्य विवेचनम्

( दि वैदिक आख्यान ऐण्ड दि इण्डियन ड्रामा The Vedic Akhyana and the Indian Drama. )

—ए. बेरीडले कीथ, डी. सी. एल्., A. Berriedale Keith, D. C. L.

[ न्यु सि०, बन्धः ४३, १९११ ], पृ. ९७९–१०१० ( पृ. ३२ )

१२. शतपथब्राह्मणाद् मुख्योपाख्यानानि

( लीजेण्ड्स चीफ्ली फ्राम दि शतपथ ब्राह्मण Legends Chiefly from the Śatapatha Brāhmaṇa. )

—जे. मूर, एस्क., डी. सी. एल्. , एल् एल्. डी. J. Muir, Esq., D. C. L., L.L. D.

[ बन्धः २०, १८६३ ई० ], पृ० ३१–४८ ( पृ० १८ )

१३. शाङ्खायन–आरण्यकविवेचनम्

( दि शाङ्खायन आरण्यक The Śānkhāyana Āranyaka. )

—ए. बेरीडले कीथ A. Berriedale Keith.

[ न्यु सि०, बन्धः ४०, १९०८ ], पृ. ३६३–३८८ ( पृ. २५ )

## निरुक्तम्

१. वैदिकदेवोत्पत्तिसम्बन्धिनि पुराणशास्त्रसम्बन्धिनि च ज्ञानक्षेत्रे साहाय्यदानानि

( कण्ट्रीब्यूशन्स टु ए नालेज आफ दि वेदिक थियोगोनी ऐण्ड माइथालोजी Contributions to a Knowledge of the Vedic Theogony and Mythology. )

—जे० मूर, डी० सी० एल्०, एल्एल्० डी० J. Muir. D. C. L., LL. D.

[ न्यू सि०, बन्धः १, भा. १,१८६४ ], पृ. ५१–१४० ( पृ. ६० )

२. वैदिकदेवोत्पत्तिसम्बन्धिनि पुराणशास्त्रसम्बन्धिनि च ज्ञानक्षेत्रे साहाय्यदानानि सं.२

( कण्ट्रीब्यूशन्स टु ए नालेज आफ वैदिक थियोगोनी ऐण्ड माइथालोजी । नं० २ Contributions to a Knowledge of the Vedic Theogony and Mythology. No. i i. )

—जे. मूर, एस्क. J. Muir, Esq.

[ न्यु सि., बन्धः २, भा. १,१८६६ ], पृ. १–२५ ( पृ. २५ )

## व्याकरणम्

१. पाणिनेर्लुप्तध्वन्यात्मकसूत्राणां व्यक्तीकरणनिरूपणम्

( डिस्कवरी आफ दि लास्ट फोनेटिक सूत्राज आफ पाणिनि Discovery of the lost Phonetic Sutras of Panini. )

—रघुवीर Raghuvira.

[ न्यु सि., बन्धः ६३, १९३१ ], पृ. ६५३–७७० ( पृ. १८ )

२. पालिभाषायां सन्धिविवेचनम्

( आन सन्धि इन पालि On Sandhi in Pali. )

—दि लेट आर. सी. चिल्डर्स The late R. C. Childers.

[ न्यु सि., बन्धः ११, १८७९ ], पृ. ९९–१२१ ( पृ. २३ )

३. पौष्करसादिशब्दविवेचनम्

( पौष्करसादि Pauskarasadi )

—जार्ल कार्पेण्टियर Jarl Charpentier.

[ न्यु सि., बन्धः ६०, १९२८ ], पृ. ३३९–३४८ ( पृ. १० )

४. बहुकालादागतस्य प्राकृतस्य संबन्धवाचकविशेषणानां व्यक्तीकरणम्
( दि पजेस्सिव ऐड्जेक्टिव्स आफ लेट प्राकृत The Possessive Adjectives of Late Prakrit. )
—एल्. ए. स्क्वार्ज्सचाइल्ड L. A. Schwarzschild.
[ न्यू सि. बन्धः ८६, १९५४ ], पृ. १२७–१३६ ( पृ. १० )

५. भारतीयमध्यार्ये सम्प्रसारणविवेचनम्
( सम्प्रसारण इन मिडिल इण्डो–आर्यन Samprasarana in Middle Indo-Aryan. )
—के. आर. नार्मन K. R. Norman.
[ न्यु सि., बन्धः ९०, १९५८ ], पृ. ४४–५० ( पृ. ७ )

६. भारतीयार्याणां मध्यकाले 'झटिति' इत्यर्थे केषाञ्चिच्छब्दानां टिप्पणनिरूपणम्
( नोट्स आन सम वर्ड्स मीनिङ्ग 'इमीजीएटली' इन मिडिल इण्डो–आयन Notes on some words Meaning 'Immediately' in middle Indo-Aryan. )
—एल्. ए. स्कार्ज्सचाइल्ड L. A. Schwarzschild.
[ न्यु सि., बन्धः ६३, १९६१ ), पृ. ३९–४४ ( पृ. ६ )

७. भाषाया भारतीयशास्त्रे शब्दार्थविश्लेषण-निरूपणम्
( अनेलिसिस आफ मीनिङ्ग इन दि इण्डियन फिलासाफी आफ लैंङ्गुएज Analysis of Meaning in the Indian Philosophy of Language. )
—सिद्धेश्वर वर्मा, एम्. ए., शास्त्री Siddheshwar Varma, M. A., Shastri
[ न्यु सि., बन्धः ५७, १९२५ ], पृ. २१–३५, ( पृ. १५ )

८. मुग्धावबोधमौक्तिकविवेचनं तथा प्राचीनगुजरातीभाषासदृशं तस्य प्रत्यक्षीकरण-निरूपणम्
( आन दि मुग्धावबोधमौक्तिक ऐण्ड इट्स एवीडेन्स ऐज टु ओल्ड गुजराती On the Mugdhavabodhamauktika and its evidence as to old Gujarati. )
—जी. ए. ग्रियर्सन, सी. आइ. इ., आइ. सी. एस्. G. A. Grierson, C. I. E., I. C. S.
[ न्यु. सि. बन्धः ३४, १९०२ ], पृ. ५३७-५५६ ( पृ. २० )

९. संस्कृतजन्य–शब्दस्यार्थनिरूपणम्
( संस्कृत जन्य Sanskrit Janya. )
—एफ. डब्ल्यू. टामस F. W. Thomas.
[ न्यु सि., बन्धः ७८, १९४९ ], पृ. ४–१३ ( पृ. १० )

१३

१०. संस्कृतशब्दयोः शष्पबाष्पयोर्व्याकृतिनिरूपणम्

( संस्कृत शष्प ऐण्ड बाष्प Sanskrita Śaṣpa and Baṣpa. )

—टी. बरो

[ न्यु सि., बन्धः १०१, १९६९ ], पृ. ११२--११७ ( पृ. ६ )

११. संस्कृत-शौटीरशब्दस्य व्याकृतिविवेचनम्

( संस्कृत शौटीर Sanskrita Śautīra )

—टी. बरो

[ न्यु सि., बन्धः १०२, १९७० ], पृ. १५–१९ ( पृ. ५ )

## ज्यौतिषम्

१. प्राचीनाया भारतीय-जलघटिकाया विवेचनम्

( दि ऐन्सिएण्ट इण्डियन वाटर–क्लाक The Ancient Indian Water—Clock. )

—जे. एफ्. फ्लीट, आई. सी. एस्., पी-एच्. डी., सी. आइ. इ. J. F. Fleet, I. C. S. ( Retd. ), Ph. D., C. I. E.

[ न्यु सि., बन्धः ४७, १९१५ ], पृ. २१३–२३० ( पृ. १८ )

२. बृहत्संहिताविषयकम्, अथवा वराहमिहिरस्य मूल-फलितज्योतिषः पूर्णपद्धतिविषयकं विवेचनम्

(दि बृहत्संहिता आर कम्प्लीट सिस्टम आफ नेचुरल एस्ट्रालाजी आफ वराहमिहिर The Braht-Saṅhitā or Complete System of Natural Astrology of Varāha Mihira. )

—डॉ॰ एच्॰ कर्ण Dr. H. Kern.

[ न्यु सि., बन्धः ४, भा. २, १८७० ], पृ. ४३०–४७९ ( पृ. ५० )

३. बृहत्संहिताविषयकम् अथवा वराहमिहिरस्य मूल-फलितज्योतिषः पूर्णपद्धतिविषयकं विवेचनम्

(दि बृहत्संहिता; आर, कम्प्लीट सिस्टम आफ नेचुरल एस्ट्रालाजी आफ वराहमिहिर The Bṛhat–Sanhitā; Or Complete System of Natural Astrology of Varāha–Mihira. )

—डॉ॰ एच्. कर्ण Dr. H. Kern.

[ न्यु सि., बन्धः ५, भा. १, १८७१ ], पृ. ४५–९० ( पृ. ४६ )

४. बृहत्संहिताविषयकम्, अथवा वराहमिहिरस्य मूल-फलितज्योतिषः पूर्णपद्धतिविषयकं विवेचनम्

(दि बृहत्संहिता; आर, कम्प्लीट सिस्टम आफ नेचुरल एस्ट्रालाजी आफ वराहमिहिर The Bṛhat-Saṅhitā; or, Complete System of Natural Astrology of Varāha-Mihira. )

—डॉ॰ एच्. कर्ण Dr. H. Kern.

[ न्यु सि. बन्धः ५, भा. २, १८७१ ], पृ. २३१–२८८ ( पृ. ५८ )

५. बृहत्संहिताविषयकम् अथवा वराहमिहिरस्य मूल-फलितज्योतिषः पूर्णपद्धतिविषयकं विवेचनम्

( दि बृहत्संहिता; आर, कम्प्लीट सिस्टम आफ नेचुरल एस्ट्रालाजी आफ वराहमिहिर The Bṛhat-Sanhitā, or, Compiete System of Natural Astrology of Varāha-Mihira. )

—डॉ० एच्. कर्ण Dr. H. Kern.

[ न्यु सि., बन्धः ६, भा. १, १८७३ ], पृ. ३६–६१ ( पृ. ५९ )

६. बृहत्संहिताविषयकम् अथवा वराहमिहिरस्य मूलफलितज्योतिषः पूर्णपद्धतिविषयकं विवेचनम्

( दि बृहत्संहिता; आर कम्प्लीट सिस्टम आफ नेचुरल एस्ट्रालाजी आफ वराहमिहिर The Bṛhat-Sañhita; or Complete system of Natural Astrology of Varāha-Mihira.

—डा० एच्० कर्ण— Dr. H. Kern.

[ न्यु सि०, बन्धः ६, भा० २, १८७३ ], पृ० २७९-३३८ ( पृ० ६० )

७. बृहत्संहिताविषयकम् अथवा वराहमिहिरस्य मूलफलितज्योतिषः पूर्णपद्धतिविषयकं विवेचनम्

( दि बृहत्संहिता आर कम्प्लीट सिस्टम आफ नेचुरल एस्ट्रालाजी आफ वराहमिहिर The Bṛhat-Sañhita; or, Complete system of Natural Astrology of Varāha-Mihira. )

—डा० एच्० कर्ण Dr. H. Kern.

[ न्यु सि०, बन्धः ७, भा० १, १८७५ ], पृ० ८१-१३४ ( पृ० ५४ )

८. भारतीयगणकद्वारा भेदात्मककलन-सिद्धान्तविषये कृतस्य विशिष्टान्वेषणस्य विवेचनम्

( नोट आन दि सपोज्ड डिस्कवरी आफ दि प्रिंसपुल आफ दि डिफरेंशियल कलकुलस बाई ऐन इण्डियन एस्ट्रानोमर )

—डबल्यू स्पाटिसवूड, एस्क

[ बन्धः १७, १८६० ], पृ० २२१-२२२ ( पृ० २ )।

९. यतो ध्रुववृत्तस्थानस्य निरीक्षणम् अनुसन्धेयतिथिज्ञानं च तन्नक्षत्रविचारः

( आन दि ज्योतिष आब्जर्वेशन आफ दि प्लेस आफ दि कलर्स, ऐण्ड दि डेट डिराइवेबुल फ्राम इट् On the Jyotisha Observation of the Place of the Colures, and the Date derivable from it. )

—विलियम डी० ह्विटनी, एस्क William D. Whitney Esq.

[ न्यु सि०, बन्धः १, भा० २, १८६५ ], पृ० ३१६-३३१ ( पृ० १६ )।

१०. शनैश्चरग्रहस्य मध्यवर्तिस्थानप्राप्त्यर्थकं तालिकाविवेचनम्
( टेबुल्स फार फाइण्डिङ्ग दि मीन प्लेस आफ दि प्लैनेट सैटर्न Tables for finding the Mean Place of the Planet Saturn. )
—जे० एफ० फ्लीट, आई० सी० एस्०, पी-एच्० डी०, सी० आइ० इ० J. F. Fleet, I. C. S. ( Retd. ), Ph. D., C. I. E.
[ न्यु सि०, बन्धः ४७, १९१५ ], पृ० ७४१-७५६ (पृ० १६ ) ।

११. सूर्यसिद्धान्तविषयको विचारः तथा च ग्रहणगणनायां हिन्दु-प्रणाली
( आन दि सूर्यसिद्धान्त, ऐण्ड दि हिन्दू मेथड आफ कलकुलेटिंग एक्लिप्सेज On the Sūrya-Siddhānta, and the Hindu Method of Calculating Eclipses. )
—विलियम स्पाटिस्वूड, एस्क०, एम्० ए०, एफ० आर० एस्० William Spottiswoode, M. A., F. R. S.
[ बन्धः २०, १८६३ ई० ], पृ० ३४५-३७० ( पृ० २६ ) ।

१२. हिन्दु-ज्यौतिषशास्त्रे तद्विषयक-अस्मज्ज्ञानेतिहासे च व्याख्यानिरूपणम्
( नोट्स आन हिन्दू एस्ट्रोनामी ऐण्ड दि हिस्ट्री आफ आवर नालेज आफ इट् Notes on Hindu Astronomy and the History of our knowledge of it. )
—जेम्स बर्गेस, सी० आई० इ०, एल् एल्० डी०, एम्० आर० ए० एस्० James Burgess, C. I E., LL. D., M. R. A. S.
[ न्यु सि०, बन्धः २५, १८९३ ], पृ० ७१७-७६२ ( पृ० ४६ ) ।

## आयुर्वेदः

कासाञ्चिद् अव्यक्तशल्यमर्यादानां विषये प्राचीन-भारतीयायुर्वेदे ज्ञानार्जनविवेचनम्
( स्टडीज इन ऐन्सिएण्ट इण्डियन मेडिसिन, आन सम अब्स्क्योर एनाटोमिकल टर्म्स Studies in Ancient Indian Medicine, On some Obscūre Anatomical Terms. )
—ए० एफ्० रुडाल्फ हार्न्ले A. F. Rudolf Hoernle.
[ न्यु सि०, बन्धः ३८, १९०६ ], पृ० ६१५-६४२ ( पृ० २८ ) ।

२. कासाञ्चिद् अव्यक्तशल्यमर्यादानां विषये प्राचीन-भारतीयायुर्वेदे ज्ञानार्जनविवेचनम्
(स्टडीज इन ऐन्सिएण्ट इण्डियन मेडिसिन, आन सम अब्स्क्योर एनाटोमिकल टर्म्स Studies in Aucient Indian Medicine, on some obscure Anatomical terms. )
—ए० एफ० रुडाल्फ हार्न्ले A. F. Rudolf Hoernle.
[ न्यु सि०, बन्धः ३९, १९०७ ], पृ० १-१८ ( पृ० १८ ) ।

—क्रमशः

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. प्रकाशक का नाम | श्री भागीरथप्रसाद त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय<br>वाराणसी |
| ४. सम्पादक का नाम | श्री भागीरथप्रसाद त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय,<br>वाराणसी |
| ५. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय,<br>मुद्रणालय, वाराणसी |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय,<br>वाराणसी |

मैं श्री भागीरथप्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथप्रसाद त्रिपाठी
संचालक
अनुसन्धानसंस्थान
वा० सं० वि० वि०, वाराणसी–२

पञ्जीकरण संख्या— ६९८१।५७

# सारस्वती सुषमा

## वाराणसेय-संस्कृत-विश्वविद्यालय-पत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. 'प्रस्तोता, वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी' इति संकेतेन ( 'बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव ) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादक, सारस्वती सुषमा, वाराणसेय-संस्कृत-विश्वविद्यालय, वाराणसी–२' इति सङ्केतेन विधेयः।

प्रकाशकः—सञ्चालकः, अनुसन्धानसंस्थानम्, वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी २।
मुद्रकः—श्री घनश्यामोपाध्यायः, वाराणसेय-संस्कृत-विश्वविद्यालयीय-मुद्रणालयः, वाराणसी २।
मु० सं०—३८/७३